श्रीवराहमिहिराचार्यविरचिता

भट्टोत्पलविवृतिसहिता

# बृहत्संहिता

## प्रथमो भागः

कुलपतेः डॉ० मण्डनमिश्रस्य 'शिवसङ्कल्प'-
पुरोवाचा पुरस्कृता

सम्पादकः
डा० कृष्णचन्द्रद्विवेदी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 97 ]

# BṚHATSAṀHITĀ

## [ PART ONE ]

*BY*

ŚRĪ VARĀHAMIHIRĀCĀRYA

With the Commentary of Bhaṭṭotpala

*FOREWORD BY*

**DR. MANDAN MISHRA**

*VICE-CHANCELLOR*

*EDITED BY*

**DR. KṚṢṆACANDRA DVIVEDĪ**

*Ex-Professor & Head, Jyotiṣa Department*

Sampurnanand Sanskrit University

Varanasi




VARANASI

1996

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 97 ]

# BṚHATSAṀHITĀ

[ PART ONE ]

*BY*

ŚRĪ VARĀHAMIHIRĀCĀRYA

With the Commentary of Bhaṭṭotpala

*FOREWORD BY*

**DR. MANDAN MISHRA**

*VICE-CHANCELLOR*

*EDITED BY*

**DR. KṚṢṆACANDRA DVIVEDĪ**

*Ex-Professor & Head, Jyotiṣa Department*

Sampurnanand Sanskrit University

Varanasi




VARANASI

1996

सरस्वतीभवन-ग्रन्थमाला

[ ९७ ]

श्रीवराहमिहिराचार्यविरचिता

भट्टोत्पलविवृतिसहिता

# बृहत्संहिता

[ प्रथमो भागः ]

कुलपतेः डॉ. मण्डनमिश्रस्य 'शिवसङ्कल्प'-पुरोवाचा
पुरस्कृता

सम्पादकः

**डॉ. कृष्णचन्द्रद्विवेदी**

*आचार्योऽध्यक्षचरश्च,*
*सम्पूर्णानन्दसंस्कृतविश्वविद्यालये*
*वाराणसी*




वाराणस्याम्

२०५३तमे वैक्रमाब्दे    १९१८तमे शकाब्दे    १९९६तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —

**निदेशकः, अनुसन्धानसंस्थानस्य**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी।



*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी,

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१ ००२.



*प्राप्तिस्थानम् —*

**विक्रय-विभागः,**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१ ००२.

द्वितीयं संस्करणम्, १००० प्रतिरूपाणि

मूल्यम्— २००-०० रूप्यकाणि

*मुद्रकः —*

**तारा प्रिंटिंग वर्क्स**

कमच्छा, वाराणसी-२२१ ०१०.

# शिवसङ्कल्पः

पुरा ग्रन्थप्रणयनप्रकारा विविधा अभवन्— सूत्र-भाष्य-वृत्ति-विवृति-वार्तिक-चूर्णिका-व्याख्यान-व्याख्या-टीकाप्रभृतयः। तेषु संहिताप्रकारोऽप्येक आसीत्। संहिता, अर्थाद् बहूनां विषयाणां सम्यगाहृत्यैकत्र विशदं वर्णनम्। यथा संहिताशब्दव्युत्पत्तिर्वदति— सम् = सम्यक्प्रकारेण, धा = डुधाञ्-धारणे धातोर्निष्ठायां क्तप्रत्यये ''दधातेर्हिः'' इति सूत्रेण 'हि' इत्यादेशे स्त्रीत्वविवक्षायां टापि 'संहिता' इति। तेन ऋग्वेदसंहिता-यजुर्वेदसंहिता-सामवेदसंहिता-अथर्ववेदसंहिता-जयसंहिता-चरकसंहिता-सुश्रुतसंहिता-गर्गसंहिता-प्रभृतयो ग्रन्था दृष्टिपथमायान्ति। यथार्थपुरःसरं संहिताग्रन्थानामिदं वैशिष्ट्यमासीद् यत् प्रस्तुतविषयेण सहावान्तरप्रचुरविषयाणामप्येकत्र समावेशनमभवत्। दृश्यन्ते च वेदसंहितासु नानाविधा आध्यात्मिकाधिदैविकाधिभौतिकैतिह्यभूगोलखगोलादिसामग्र्यः। महाभारतमभिलक्ष्यैषोक्तिः प्रसिद्धैव —

**'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्'।**

शुद्धायुर्विज्ञानशास्त्रं 'चरकसंहिता' अथवा 'सुश्रुतसंहिता'; किन्तु तत्रात्मपरमात्मजीवेश्वर-शुभाशुभकर्मपुण्यपापैहिकामुष्मिकसुखदुःखादिसर्गप्रतिसर्गाद्यनेकविषया अपि सन्दृब्धाः।

एतस्मिन् ग्रन्थप्रणयनसंहिताप्रकारे प्रस्तुतोऽयं श्रीवराहमिहिरप्रणीतः श्रीभट्टोत्पलप्रणीत-विवृतिसहितो **'बृहत्संहिता'**-ग्रन्थः। यद्यप्ययं ज्यौतिषशास्त्रस्य प्रमुखो ग्रन्थस्तथापि भुवनकोश इवाध्यात्मिकैतिहासिक-भौगोलिक-पौराणिक-धार्मिकादिविविधा विपुला विषया अप्यत्र संलक्ष्यन्ते। दिङ्मात्रं यथा—

**कपिलः प्रधानमाह द्रव्यादीन् कणभुगस्य विश्वस्य।**
**कालं कारणमेके स्वभावमपरे परे जगुः कर्म ।।** (१।७)

अत्र दर्शनदृशा सृष्टिकारणम्।

**ब्रह्माणमूचुरमरा भगवन् शक्ताः स्म नासुरान् समरे।**
**प्रतियोधयितुमतस्त्वां शरण्यशरणं समुपयाताः।।** (४२।१)

**देवानुवाच भगवान् क्षीरोदे केशवः स वः केतुम्।**
**यं दास्यति तं दृष्ट्वा नाजौ स्थास्यन्ति वो दैत्याः।।** (तत्रैव)

अत्रेतिहासपुराणे।

**'शोणस्य नर्मदाया भीमरथ्याश्च पश्चिमार्द्धस्था:'**। (१६।९)

एवमादौ भौगोलिकम्।

**'आगच्छन्तु सुराः सर्वे येऽत्र पूजाभिलाषिण:'**। (४७।२०) इत्यादि।

**'मूलस्थाने जुहुयात् पुरोहितोऽग्निम्'**। (४७।७७) इत्यादि।

अत्र धर्मकृत्यम्।

**'शकयवनमगधशबरप्राग्ज्योतिषचीनकाम्बोजा:'**। (१६।१) इत्यादि।

अत्र विविधदेशा:। एवमेव स्त्रीप्रशंसाध्याय:, यत्र नारीनिन्दका एवं निन्दिता: —

**अहो धार्ष्ट्यमसाधूनां निन्दतामनघाः स्त्रियः।**
**मुष्णतामिव चौराणां तिष्ठ चौरेति जल्पताम्।**। (स्त्री.प्र., अ. १५)

अत्र नारीप्रशंसा। एवमेव तदानीं के के धार्मिका: केषां केषामुपासका आसन्नित्यपि वर्णितम् —

**विष्णोर्भागवतान् भगाँश्च सवितुः शम्भोः सभस्म द्विजो**
**मातॄणामपि मण्डलक्रमविदो विप्रान् विदुर्ब्रह्मणः।**

**शाक्यान् सर्वहितस्य शान्तमनसो नग्नान् जिनानां विदु-**
**र्ये यं देवमुपाश्रिताः स्वविधिना तैस्तस्य कार्या क्रिया।**। (५९।१९)

एवमेव संस्कृतेतरारबीकशब्दानामपि यत्र तत्र प्रयोग:।

इत्थञ्चायं ग्रन्थ औपयोगिकानां ज्यौतिषायुर्वेद-शाकुनिकौत्पातिक-शान्तिक-पौष्टिक-वृक्षायुर्वेद-धार्मिकाध्यात्मिक-भौगोलिकैतिहासिकादि-विविधविचित्रविलक्षणविषयाणां सन्निवेशेन **बृहत्संहिता** बृहत्संहितैवेति परमोपयोग्ययं संस्कृतवाङ्मयस्य मूर्द्धाभिषिक्तो ग्रन्थ:। तमिमं ग्रन्थं पिटकाध्यायपर्यन्तं प्रथमभागात्मकं विपश्चितां करकमलेषु समुपाहरन् परमं मुदमावहामि।

इदमस्ति संस्कृतवाङ्मयस्य वैशिष्ट्यं यदेकं शास्त्रमपरेण शास्त्रेण सर्वथा सुसम्बद्धम्। ज्यौतिषशास्त्रं तु सर्वेषां शास्त्राणां पथप्रदर्शकम्। धार्मिकानि पर्वाणि धर्मशास्त्रदृशा ज्यौतिषशास्त्रस्य निर्देशमपेक्ष्यन्ते। अस्माकमायुर्विज्ञानशास्त्रं चिकित्सासमारम्भ-औषधिसङ्ग्रह-भैषज्यरसायनादिनिर्माण-अन्नग्रहणादिप्रसङ्गेषु ज्यौतिषशास्त्रस्य मुहूर्त्तविनिश्चयं सर्वत: प्राग् आवश्यकं सम्मनुते। एवमेव दर्शनस्य विभिन्नानां तत्त्वानां धर्मशास्त्रस्यापि गम्भीरस्य पाण्डित्यस्य विशिष्टानां ज्योतिर्विदां कृतेऽस्त्यनिवार्यं महत्त्वम्। अस्यां बृहत्संहितायामेतादृशस्य विविधज्ञानविज्ञानस्य चित्रं सुस्पष्टमवलोकयितुं शक्यते।

अयमस्ति हर्षप्रकर्षस्य विषयो यदयं विश्वविद्यालय एतादृशानां विदुषां परम्परया

सुसमृद्धः। तस्याः परम्परायाः प्रतीकभूता विश्वविद्यालयस्यास्य ज्यौतिषविभागाध्यक्षचराः **डॉ. कृष्णचन्द्रद्विवेदि**महाशया वर्तन्ते, यैर्विश्वविद्यालयोऽयं स्वकीययाऽध्ययनाध्यापनशोधसाधनया संसेवितः। अस्मिन्नेव वर्ष एभिः सम्पादितस्य **'सिद्धान्ततत्त्वविवेक'**-ग्रन्थस्य प्रकाशनं विश्वविद्यालयेन कृतम्। इदमपि बृहत्संहिताया द्वितीयं संस्करणं तेषां सम्पादने प्रकाश्यत इत्यस्माकं कृते गौरवस्य विषयः। एतेन ज्यौतिषशास्त्रस्य महिमा संवर्द्धिष्यते।

एतां सिद्धिमुपलक्ष्याहं मनीषिप्रवरेभ्यः **डॉ. कृष्णचन्द्रद्विवेदि**महोदयेभ्यः स्वकीयमादराञ्जलिम्, विश्वविद्यालयस्यास्य प्रकाशनाधिकारिणे **डॉ. हरिश्चन्द्रमणित्रिपाठिने**, ग्रन्थस्यास्य मुद्रकाय तारायन्त्रालयस्य सञ्चालकाय **श्रीरविप्रकाशपण्ड्या**महोदयाय च शुभकामनाः समर्पयन् ग्रन्थमिमं ज्यौतिषशास्त्रविशारदानां सेवायामुपायनीकरोमि।

**वाराणसी**
चैत्रपूर्णिमा,
वि. सं. २०५३
(३.४.१९९६ खैस्ताब्दः)

***मण्डनमिश्रः***
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# मङ्गलाचरणम्

श्रुतिविदितविभूतिः संसृतेरेकदीपो
घनतिमिरविभेत्ता लोकचक्षुर्नमस्यः ।
निखिलभुवनगोप्ता जीवनं प्राणिनां स
उदयति रविरात्मा भास्वरः कर्मसाक्षी ।।१।।

ग्रहगणमवधृत्या चालयत्येष नित्यं
गगनभवनभूतिः श्रीप्रभाराशिरूपः ।
श्रुतिनयनविभर्ता ब्रह्मलोकस्य पन्थाः
प्रतिदिनमुदयन् वै जीवलोकं दधाति ।।२।।

सुचरितनृपवंशो मन्त्रमूलः प्रणम्यो
भवविभवनिमित्तं संश्रयः संसृतेः सः ।
तपति पतिरमोघं पावयन् भूतसङ्घं
दशशतकरधारी मङ्गलायास्तु सूर्यः ।।३।।

लम्बोदरं श्रीगिरिजातनूजं
विघ्नेश्वरं सिद्धिगणैः समेतम् ।
वन्दे गणेशं तनयं शिवस्य
निरस्य विघ्नान् शिवमातनोतु ।।४।।

उमामहेशाङ्कमणिं स्फुरन्तं
पूज्यं द्विपास्यं मुनिदेवसंघैः ।
श्रीसिद्धिसम्पत् सुखदं नमामि
हेरम्बमीशं प्रथमं नमस्यम् ।।५।।

वन्दे गिरीन्द्रतनयातनयं दयालुं
सौभाग्यसन्ततिकरं करिसुन्दरास्यम् ।
शम्भुप्रियं सुरगणैर्मुनिभिश्च वन्द्यं
विघ्नानपोह्य मम मङ्गलमातनोतु ।।६।।

अङ्के लसन् करिमुखो गिरिराजपुत्र्या
संवीक्षितश्च शिववत्सललोचनाभ्याम् ।
दूर्वादलैश्च कुसुमादिभिः पूजितोऽसौ
विघ्नान् निवारयतु मङ्गलमातनोतु ।।७।।

वन्दे विभूतिसुविभूषितसर्वगात्रं
काशीश्वरं सकललोकभवादिहेतुम् ।
विद्यानिधानममृतेन्दुकलाललाट-
मङ्गीकृताद्रितनयं वरविश्वनाथम् ।।८।।

वन्दे सदा पशुपतिं करुणैकसिन्धुं
गङ्गाधरं विषमलोचनमिन्दुभूषम् ।
ब्रह्मादिदेवमहितं परबोधरूपं
सोमं शिवं सुभजतां परमार्थदञ्च ।।९।।

उमामहेश्वरौ वन्दे सर्वप्रत्ययसाक्षिणौ ।
याभ्यां सर्वस्य विश्वस्य जन्मादि संप्रवर्तते ।।१०।।

पूज्या श्रीगिरिजा शिवाङ्गलसिता काश्यां सदा राजते
योगक्षेमकरी सतां जनिमतां नित्यं शिवं ध्यायताम्।
कारुण्याम्बुधिलोचना भगवती मातान्नपूर्णा परा
दृष्ट्वा शम्भुमहो समाधिसुगतं पाति स्वयं सर्वदा।।११।।

नित्यं स्वाध्यायशीलानां न किञ्चिदपि कुर्वताम्।
अलसानां बुभुक्षूणामन्नपूर्णा हि पालिका ।।१२।।

नाभुक्तः प्राणवान् कश्चित् काश्यां यत्कृपया भृशम् ।
तस्यै भवान्यै पूर्णायै भुक्तिमुक्तिकृते नमः ।।१३।।

पीताम्बरेति बगलेति वदन् मनुष्यः
लोकाञ्जयेद् निहतशत्रुरकण्टकश्रीः ।
सा लोकमङ्गलकरी करुणार्द्रचित्ता
काश्यां सदा विजयते बगला पराम्बा ।।१४।।

सौवर्णभूषणविभूषितसर्वदेहा
पीताम्बरा भगवती भवभावसिद्धा ।
माता स्मृता प्रकुरुते सकलां समृद्धिं
शत्रून् विदार्य विजयं भजतां जनानाम् ।।१५।।

पीतैः पुष्पफलैश्च पीतवसना पीतप्रिया प्रीतिदा।
सौवर्णाभरणैर्विभूषिततनुः सौवर्णसिंहासने।
संस्था वैरिविनाशिनी भगवती पीताम्बरा पूजिता।
माता श्रीबगला प्रसन्नवदना वाक्स्तम्भिनी राजते।।१६।।

## वराहमिहिराचार्यः

श्रीमान् वराहमिहिरो मिहिरो ज्यौतिषाम्बरे ।
उदितोऽभिनवः कश्चिद् ज्योतिषां ज्योतिरद्भुतम्।।१७।।

विक्रमादित्यनृपतेः सभारत्नमभूदयम् ।
नवरत्नेषु महितो वराहमिहिरो महान् ।।१८।।

विद्यासु वेदप्रभवासु नानाविधासु विद्वानपि सूक्ष्मबुद्धिः ।
अभूद् वराहो मिहिरः प्रसिद्धो ज्योतिर्नये लब्धपरप्रतिष्ठः।।१९।।

अचार्य एषोऽभिनवावतारः
सूर्यस्य देवस्य सहस्ररश्मेः ।
अभूत् प्रसिद्धः प्रतिभाप्रकाशै-
र्विध्वस्तविभ्रान्तितमःसमूहः ।।२०।।

आदित्यदासादादित्यभक्तवंशात् पितुः सतः ।
लब्धजन्मा महामेधा विद्वत्कुलविभूषणः ।।२१।।

सूर्यप्रसादात् प्रतिभाविशेषाद्
आचार्यवान् ज्योतिरवाप्तवान् सः ।
बभूव लोके रचनाविशेषाद्
ज्योतिर्विदाचार्य इति प्रसिद्धः।।२२।।

मुहूर्त्तहोरागणितेषु सर्वे-
ष्वपि त्रिषु प्राप्तविशिष्टबुद्धिः ।
ग्रन्थानतिक्रान्तपरान् निबन्धान्
अरीरचच्छास्त्रमतप्रसिद्धान् ।।२३।।

अवन्तिकाविक्रमराजधानी पुरी प्रसिद्धा भुवि मोक्षदात्री ।
सम्मानमापेह तथा सभायां श्रीविक्रमस्य नवरत्नमध्ये ।।२४।।

शास्त्रप्रमाणैः सुपरीक्षया च
वेधैः सयन्त्रैर्विविधैः समूहैः ।
नक्षत्रविद्यां गणितैर्मुहूर्तैः
फलैः समग्रामधिकां चकार ।।२५।।

परीक्ष्य सम्यग् विविधान् विचारान्
ज्योतिर्नये प्राक्प्रथितान् विरुद्धान् ।
वैदेशिकान् यावनरोमकांश्च
तथार्षसिद्धान्तमतानि विद्वान् ।।२६।।

वेधप्रमाणैः प्रतिभाविशेषै-
र्दृढीकृतान्येव नवानि नूनम्।
अन्यानि तत्त्वानि नियोजितानि
प्रकाशयामास निजप्रबन्धे।।२७।।

दृढाः प्रबन्धा विदुषां मनोरमा-
स्त्रिषु प्रकारेषु कृताः प्रकाशिताः।
वराहनाम्ना मिहिरेण तेजसा
महार्हमूर्धन्यविभूषणानि ते ।।२८।।

वराहमिहिरेणोक्तं होराशास्त्रं बृहद्भुवि ।
वर्तते ज्यौतिषे शास्त्रे जातके मूर्धनि स्थितम्।।२९।।

ग्रहराशिफलैः सम्यग् राजयोगादिलक्षणैः।
ज्यौतिषैर्विषयैर्युक्तं साश्चर्यं वीक्ष्यते बुधैः।।३०।।

ग्रहचारादिभिर्युक्तां खड्गरत्नादिलक्षणैः।
छन्दोभिर्विविधै रम्यैर्ज्यौतिषैः विषयैर्युता ।।३१।।

बृहती संहिता ख्याता रचिता विस्तृताऽद्भुता ।
ज्योतिःशास्त्रस्य सर्वस्वभूताचार्येण तेन सा ।।३२।।

न भाति ज्यौतिषं शास्त्रमम्बरं मिहिरं विना ।
तमो व्याकुलितं ह्येतद् विफलीकृतलोचनम् ।।३३।।
सुविभाति महाशास्त्रं कौशलेन समुद्धृतम्।
आचार्येण सुविज्ञेन वराहेणेव मेदिनी ।।३४।।

एवंविधाकरग्रन्थान् ज्योतिःशास्त्रस्य सम्मतान् ।
रचयामास मिहिरो वराहो हि महायशाः ।।३५।।

आसीत् पाटलिपुत्राख्यं नगरमुज्जयिनी तथा ।
कार्यक्षेत्रं तु विदुषो महाचार्यस्य धीमतः ।।३६।।

बृहती संहिता ग्रन्थो वराहस्य महामतेः ।
कृष्णचन्द्रेण विदुषा विशोध्य संप्रकाश्यते ।।३७।।

ज्योतिःशास्त्रमहाचार्यो बुधचक्रशिरोमणिः ।
दैवज्ञः सत्यवाक् कृष्णचन्द्रो धीमान् शुचिव्रतः।।३८।।

पूज्ये देवरियाभिधे जनपदे ग्रामे सजाँवाभिधे
जातोऽसौ सरयूत्तरे शुभतटे गोत्राद्भरद्वाजतः ।
आचार्यः प्रतिभाबलैरधिगतज्योतिर्नयः सर्वश
आचार्यस्य कृतिं स्थिरां सुप्रथितां सम्पादयन् मोदते।।३९।।

धन्याऽस्य माता रजलाभिधाना
धन्यः कुबेरो जनको द्विवेदी।
वंशश्च धन्यो हि यतः प्रसूतः
श्रीकृष्णचन्द्रो ननु पूर्णचन्द्रः।।४०।।

ज्योतिःशास्त्रे लब्धकीर्तिः कृतात्मा
सत्याचारः सत्यसन्धो वरिष्ठः।
शुभ्रैः कृत्यैस्तारितः स्वीयवंश-
स्तेन प्रीता गोद्विजाः पितृसंघाः।।४१।।

अयं हि धैर्येण धिया श्रमेण च
पुरातनं ग्रन्थमिमं सुविस्तरम् ।
विशोध्य सम्पाद्य सुनीतवान् भुवि
प्रकाशतां लोकहिताय पण्डितः ।।४२।।

श्रीकृष्णचन्द्रस्य सुधीवरस्य
चिरायुरारोग्यसुखादिमिच्छन् ।
श्रीविश्वनाथं सहितं भवान्या
संप्रार्थये सम्प्रतिपन्नबुद्ध्या ।।४३।।



# वराहमिहिराचार्यप्रणीताया बृहत्संहितायाः पृष्ठभूमिका

**अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम् ।**
**प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ।।**

१. निखिलब्रह्माण्डस्य रचनासु पृथिव्याः सर्वप्रथमविज्ञानं प्रकाशविज्ञानमेवास्ति यद्धि ज्यौतिषविज्ञाननाम्ना प्रसिद्धमस्ति। सूर्यस्य प्रथमोदयः प्राणिमात्रस्य कृते विशेषरूपेण मानवमात्रस्य कृते आह्लादकारकश्चमत्कारपूर्णश्चासीत्। निरन्तरमनुभवेन अभ्यासकारणेन चास्य ''दिन'' इति संज्ञा बभूव।

अनेन प्रकारेण सूर्यास्तस्यानन्तरम् अर्धगोलाकारकश्चन्द्रः सर्वैर्नक्षत्रैर्ग्रहोपग्रहैः सह अतीव शोभनीयो नयनाभिरामो नीलगगने मानवैः आश्चर्यान्वितेन चक्षुषाऽवलोकितः। क्रमेण सम्पूर्णा निशा प्रकाशवती तमोयुक्ता च दृष्टा। सूर्यस्य पृथिव्याश्च खगोलीयस्थित्या रात्रिः, दिवसश्च बभूवतुः। क्रमशः प्रवर्धमानश्चन्द्रः पञ्चदशम्यां तिथौ पूर्णाकारकः (पूर्णगोलाकाररूपेण) अवलोकितो बभूव।

इत्थं दिवसः, रात्रिः, पक्षः, मासश्चेत्येते कालनाम्ना व्यवह्रियन्ते। पूर्णिमात आगामी पूर्णिमां यावत् तथा अमावस्यात आगामी अमावस्यां यावत् कालो मासशब्देन व्यवह्रियते।

२. भौगोलिकदृशा खलोगीयदृशा च सूर्य-चन्द्र-पृथिवीनां परस्परस्थित्या सञ्चलनरूपेण च ऋतूनां (ग्रीष्म-वर्षा-शरद्-ऋतूनां) प्रादुर्भावोऽभवत्। कतिपयेषु स्थलेषु षड्ऋतूनां (ग्रीष्म-वर्षा-शरद्-हेमन्त-शिशिर-वसन्त इत्येतेषां) प्रादुर्भावो वर्णितः।

३. विभिन्नासु परिस्थितिसु विभिन्नेषु समयेषु गगने ग्रहनक्षत्राणाम्, उपग्रहाणाम्, नीहारिकानाम्, आकाशगङ्गानाम्, धूमकेतूनाञ्च दर्शनमभूत्, सर्वतोऽधिकं विस्मयकारकं सूर्यग्रहणस्य चन्द्रग्रहणस्य च दर्शनमभूत्। समये-समये आकाशे उपलवृष्टेः, विद्युत्प्रकाशस्य, अनेकेषु रङ्गेषु इन्द्रधनुषोऽवलोकनम् अतीवाश्चर्यजनकमभवत्। शनैः शनैः इमानि सर्वाणि ज्ञानानि मानवमस्तिष्कजन्यज्ञानानि सन्तीति सम्पुष्टीकृतम्।

निरन्तरावलोकनविधिना अध्यात्मचिन्तनेन च ऋषयो महर्षयो ज्यौतिषशास्त्रजिज्ञासवश्च बहुकालं यावदनुसन्धाय फलानुभूतिमनुभूय च सर्वजनकल्याणभावनया फलादेशमकुर्वन्।

अस्य प्रथमः परिचयो वेदेषूपनिषत्सु पुराणेषु च दृश्यते। अनन्तरं सूक्ष्मातिसूक्ष्मरूपेण गणितगणनया ग्रहाणां यन्त्रादिकवेधादिना च ग्रहनक्षत्रादीनां ज्ञानं विधाय तां विपुलां ज्ञानराशिं प्राणिमात्रस्य सुखसाधनार्थं ''ज्यौतिषं शास्त्रम्'' इति नाम्ना अकथयन्। तद्धि ज्यौतिषं शास्त्रं त्रिस्कन्धात्मकमस्तीति वराहमिहिराचार्येण स्वयं सूचितम्। यथा—

ज्यौतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम् ।
तत्कात्स्न्यार्पनयस्य नाम मुनिभिः संकीर्त्यते संहिता ।।

शास्त्रेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ ।
होराऽन्याङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ।।

क्वचिद् एतादृशाः श्लोका अपि दृश्यन्ते यैर्ज्यौतिषशास्त्रस्य पञ्चस्कन्धात्मकत्वं सिद्धयति। यथा—

पञ्चस्कन्धमिदं शास्त्रं होरागणितसंहिताः ।
केरलिः शकुनश्चेति ज्यौतिःशास्त्रमुदीरितम्।।

शकुनकेरलिजातकादयः सर्वे इमे संहितान्तर्गता एव सन्ति, अत एव ज्यौतिःशास्त्रस्य स्कन्धत्रयात्मकत्वमेव युक्तियुक्तमस्ति। पञ्चस्कन्धात्मकमिति कथनमसमीचीनमस्ति।

प्रख्यातस्य ग्रन्थस्य सिद्धान्तशिरोमणेः कर्त्ता आचार्यभास्करः सिद्धान्तग्रन्थस्य परिभाषां कुर्वन् ज्यौतिषशास्त्रे सिद्धान्तस्कन्धस्यातीवप्रशंसां कृतवानस्ति।

प्रशंसात्मकश्लोका यथा—

त्रुट्यादिप्रलयान्तकालनामानप्रभेदक्रमा-
चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तस्य उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः।।६।।

जानन् जातकसंहिताः सगणितस्कन्धैकदेशा अपि
ज्यौतिःशास्त्रविचारसारचतुरः प्रश्नेष्वकिञ्चित्करः।
यः सिद्धान्तमनन्तयुक्तिविततं नो वेत्ति भित्तौ यथा
राजा चित्रमयोऽथवा सुघटितः काष्ठस्य कण्ठीरवः ।।७।।

गर्जत्कुञ्जरवर्जिता नृपचमूरप्यूर्जिताऽश्वादिकै-
रुद्यानं च्युतचूतवृक्षमथवा पाथोविहीनं सरः।
योषित्-प्रोषितनूतनप्रियतमा यद्वन्नमत्युच्चकै-
र्ज्यौतिःशास्त्रमिदं तथैव विबुधाः सिद्धान्तहीनं जगुः।।८।।

तन्त्रलक्षणम्—

सिद्धान्तोदीरितो ह्यर्थो निजयुक्त्यैव केवलम् ।
निखिलं यत्र तत्तन्त्रं निजोपकरणाश्रितम् ।।

एवं च यत्र युगाद्यहर्गणेन ग्रहसाधनं कृतं तत्तन्त्रमिति लक्षणं निष्पन्नम्।

**करणलक्षणम्—**

**सिद्धान्तोक्तैकदेशास्तु केचिद्यत्र निरूपिताः।**
**तदुक्तं करणं नाम्ना लघूपायो विनिर्मितम्।।**

एवं यत्र शकाद्यहर्गणेन ग्रहसाधनं तत्करणमिति व्यवच्छेद्यम्। यत्र यत्र तात्कालिकद्युचरचारवशेन सुभिक्ष-दुर्भिक्षादिसार्वभौमशुभाशुभफलं प्रस्तूयते, सा संहिता।

अत्रैव स्वर-मुहूर्त्त-शकुन-पुरुष-स्त्री-गज-तुरग-रत्न-प्रतिमालक्षणप्रभृतिनानाविषय-जातानामन्तर्भावमाचक्षते तद्विदः। अत एव विविधपदार्थसार्थसान्निध्येन विश्वजनीनत्वात् संहिताभिधानमन्वर्थाभिधायि।

**होरास्कन्धलक्षणम्—**

यत्र च प्रत्येकमनुजजननकालिकद्युचरसंस्थानुकूलभङ्ग्या तदादिषु वृत्तवर्तमान-वर्तिष्यमाणादेशाः कीर्त्यन्ते तज्जातकम्। जातमेव जातकमुत्पन्नम्, स्वार्थे कन्। उपचारात् तत्प्रतिपादकशास्त्रमपि जातकपदव्यपदेश्यमस्यैवापरपर्यायो होराशब्दः। अस्य व्युत्पादनन्तु होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरपर्यायलोपात्।

इति वराहमिहिरोक्त्या ''अहोरात्र'' शब्दस्य पूर्वापरवर्णाभावमुत्पाद्य पृषोदरादिविकल्पनया क्रियते। हुल-हिंसासंवरणयोरिति धातोः पचादेराकृतिगणत्वादचि कृते निष्पन्नो होलति हुल्यते वा होलाशब्दः। रलयोरभेदेन होराशब्दो जातः। अत्रैव यवनाचार्येण पारसीकभाषायां प्रतिपादितस्य वार्षिकफलादेशपरकस्य फलस्य ताजिकस्याप्यन्तर्भावमुशन्ति तदभिमानिनः।

**इदानीं ज्यौतिषशास्त्रस्य वेदाङ्गत्वनिरूपणम्—**

यस्य कस्यापि देशस्य ज्ञान-विज्ञान-धर्माचरण-संस्कार-संस्कृति-इत्यादीनाम् ऐतिहासिक-भौगोलिक-राजनैतिक-सामाजिक-वैज्ञानिकदृष्ट्या समसामयिकः प्रतिपादकस्तस्य देशविशेषस्य प्राचीनसाहित्यमेव भवति। अनेन विचारेण भारतवर्षस्यास्य वेद एव सर्वतः प्राचीनमस्ति। वेदस्य भाषा संस्कृतमस्ति।

वेदः सर्वज्ञानविज्ञानसम्पन्नोऽस्ति। अयं हि वेदवाक् श्रुतिश्चेति नामभिः ख्यातः। श्रवणेन मननेनावलोकनेन च ऋषीणां महर्षीणामध्यात्मचिन्तकानाञ्च दृष्टिपथे समायातः। लोककल्याणकामनया वार-नक्षत्र-तिथि-उदयास्तकालज्ञान-ऋतुज्ञानपूर्वकम् उत्तमसमये प्रकृतिदेवस्याराधनार्थं यज्ञादेर्व्यवस्था वर्तते। इमे यज्ञाः कालाधीनाः सन्ति। तस्य कालस्य ज्ञानं सूर्य-चन्द्र-ग्रह-पृथिवी-नक्षत्रादीनां संयोगाधारेण भवति। एवं समयानुसारं यज्ञादिसम्पादनेन सर्वस्मिन् क्षेत्रे जनानामपूर्वो लाभो मिलति। अत इमं समग्रं ज्यौतिषशास्त्रं वेदाङ्गस्य

मुख्यमङ्गं नेत्रस्थानं मन्यन्ते। भास्कराचार्येण स्वकीये सिद्धान्तशिरोमणिनामके ग्रन्थे अस्य स्पष्टतया प्रतिपादनं कृतमस्ति। यथा—

**वेदास्तावद् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण ।**
**शास्त्रादस्मात्कालबोधो यतः स्याद् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्।।**

इत्थं चाङ्गत्वमुपरागादिपदार्थजातनिर्णायकत्वं च तदभ्यर्हितत्वे बीजम्। तथा चोक्तं शिरोमणौ लगधतन्त्रे च क्रमेण—

**वेदचक्षुः किलेदं स्मृतं ज्यौतिषं**
**मुख्यताङ्गमध्येऽस्य तेनोच्यते ।**
**संयुतोऽपीतरैः कर्णनासादिभिः**
**चक्षुषाङ्गेन हीनो न किञ्चित्करः ।।**

**यथा शिखा मयूराणां नागानां मणयो यथा ।**
**तद्वद् वेदाङ्गशास्त्राणां ज्यौतिषं मूर्धनि स्थितम्।।**

**सिद्धान्तवैशिष्ट्यम्—**

अत एव एतन्निबन्धरहस्यालोडनेन निरूपितेषु ज्यौतिषस्कन्धेषु कतमस्योपजीव्यत्वकोटि-प्रवेश इति चेदन्वयव्यतिरेकाभ्यां सिद्धान्तस्यैव सङ्गच्छत इति निपुणं विभावनीयम्। अत एव प्रमेयसम्बोधनानुरोधेन गाणितिकानां गौरवमप्यध्याहार्याय युक्तम्—

**दशदिनकृतपापं हन्ति सिद्धान्तवेत्ता**
**त्रिदिनजनितदोषं तन्त्रविद् दृष्ट एव ।**
**करणभगणवेत्ता हन्त्यहोरात्रदोषं**
**जनयति घनमंहस्तत्र नक्षत्रसूचिः ।।**

भारतीयज्ञानराशेः प्रचार-प्रसारः पार्श्वदेशेषु अतीवतीव्रतया बभूव। बाह्यदेशीय-विशिष्टानि ज्ञानानि भारतीया अपि आत्मसात् कृतवन्तः। अङ्कगणित-बीजगणित-रेखागणित-दशमलवादिनामाकारप्रकाराः पाश्चात्यदेशेषु विभिन्नरूपेण अगच्छन्। तेन ज्यौतिषशास्त्रम् आयुर्वेदश्च विशेषरूपेण प्रभावितौ बभूवतुः।

जातकग्रन्थेषु ताजिकग्रन्थेषु रमलादिषु एवं सप्तदशाष्टादशशताब्द्या वेधशालासु, विशेषतो वराहमिहिराचार्यस्य पञ्चसिद्धान्तिका-बृहज्जातक-बृहत्संहितासु चास्य प्रभावो दृश्यते।

**वेदाङ्गज्यौतिःशास्त्रे दिनमानम्—**

वेदाङ्गज्यौतिःशास्त्रे उदगयनारम्भस्य दिनमानतो दक्षिणायनारम्भस्य दिनं यावत् संगण्य महत्तमदिने लघुतमदिनस्य ऋणं कृत्वा तस्मिन् वर्षार्धसंख्यया (१८३ इत्यनेन)

विभज्य मध्यवर्तिदिनानां कालमानं गृहीतमस्ति। इत्थमाकलितानां दिनमानानाम् अनुपातः २/३ अस्ति, अर्थात् लघुतमस्य दिनस्य सार्धैकगुणमानं महत्तमस्य दिनस्य मानमस्ति। अनेन चरघटी ३५ अंशस्य अक्षांसस्य भवति। 'खाल्दिया' इत्यस्य अक्षांसोऽप्ययमेवास्ति। अत एव कतिपया यूरोपीया मन्यन्ते यद् वेदाङ्गज्यौतिषस्य दिनमानेषु खाल्दियनप्रभावो वर्तते; परन्त्विदमवधेयं यद् वेदाङ्गज्यौतिषस्य समये उत्तर-पंजाब-सीमाप्रान्त-काश्मीर-अफगानिस्तानेषु आर्याणां निवास आसीत्। अत्रत्योऽक्षांसः ३२ अस्ति, किरणवक्रीभवनसंस्कारेणापि दिनमाने ९ क्षणानां (मिनटस्य) वृद्धिर्भवितुं शक्यते, एवं जलघटीद्वारा कालमापनविधेर्व्यवहारेणापि किञ्चिदन्तरं सम्भाव्यते। अनेन प्रकारेण वेदाङ्गज्यौतिषस्य विषयो विशुद्धरूपेण भारतीयोऽस्ति। एतदर्थं नक्षत्रेषु लग्नस्य गणना अपरप्रमाणमस्ति। वेदाङ्गज्यौतिषे उक्तमस्ति यद्—

**श्रविष्ठाभ्यो गणाभ्यस्तान् प्राग्विलग्नान् विनिर्दिशेत्।** (आर्चं ज्यौतिषम्-१९)

अर्थाद् धनिष्ठानक्षत्रतः संगण्य पूर्वक्षितिजे संलग्नानि नक्षत्राणि विनिर्देश्यानि। वेदाङ्गज्यौतिषं फलितस्य पुस्तकं नास्ति, अत एव नक्षत्राणां लग्नफलं तत्र नोपदिष्टम्; किन्तु अग्रे अथर्वज्यौतिषे नक्षत्राणां फलं दृश्यते तथा जन्म, सम्पत्तिः, विपत्तिः, क्षेमः, प्रत्यरिः, साधकः, वधः, मैत्रः, अतिमैत्र इत्येता नवसंज्ञा जन्मनक्षत्रादारभ्य कथिताः सन्ति। एतासां फलान्यपि नामानुसारं कथितानि सन्ति। उक्तप्रकारेण वयम् अवलोकयामो यद् वेदाङ्गज्यौतिषसमये गणितस्य फलितज्यौतिषस्य च भित्तिर्दृढा आसीत्।

**ज्यौतिषे खाल्दियनानां योगदानम्—**

उपरि वेदाङ्गज्यौतिषस्य नक्षत्रगणनाप्रणाली निर्दिष्टा। तासु केवलं गणनया एव चान्द्रमास-चन्द्रभगणपूर्तिकालदिवसानां संख्या निर्धारिता अस्ति या मध्यमगणनायाः स्वरूपस्यैव प्रतिनिधित्वं करोति। यूरोपीयविदुषां मतेन खाल्दियना एव प्रथमं कोणमापन-विधेराविष्कारं कृतवन्तः। एवं ग्रहणस्य निधिरूपेण क्रान्तिवृत्तस्य, कालगणनाया साधनरूपेण विषुवद्वृत्तस्य चान्वेषणं कृतवन्तः। सैरोसस्य अथवा ग्रहणचक्रस्य अन्वेषकास्त एव कथ्यन्ते।

पेनकाकनामा कश्चिद् यूरोपीयज्योतिर्विद् इत्थं कथितवान् येनेदं प्रतीयते यद् ज्यौतिषगणनायाः सम्भावनानामुद्भवः सामान्यविधिद्वारैवाभवत्। पेनकाकस्य वक्तव्यमस्ति यत्—

सा परिस्थितिः आकाशीयपरिवृत्तीनाम् अतिसरलानां तथा ध्यानाकर्षकपुनरावृत्तीनां घटना आसीद् यया ज्यौतिषगणनाया सम्भावना जाता। यो विषयो यदा कदा अथवा उपरिदृष्ट्या अनियमित आसीत् स निरन्तरगृहीतानां विशालरूपाणाम् आकलनानां

समुपस्थितौ स्वस्य नियमितत्वं प्रकटितवान्। नियमिततानामन्वेषणं न जातम्; अपि तु ता नियमितता: केनाप्याश्चर्येण विना (ममोपरि) भारभूता:। ताभिर्नियमितताभि: कतिपयसम्भावना: प्रकटीकृता:। व्यावहारिकानुभवै: प्रवर्धमानस्य दैनिकजीवनस्य सम्पूर्णयान्त्रिकस्य औद्योगिकस्य ज्ञानस्येव ''सम्भावना'' एव व्यापकस्य ज्ञानस्य प्रथमोऽचेतनस्वरूपोऽस्ति। तदनु शनै: शनै: सम्भावना भविष्यफलानि वक्तुं प्रभवति, यस्यायमभिप्रायो यद् अस्या नियमितता एवं तस्याश्चेतनरूपे आगमनम्। खगोलीयपरिवृत्तिषु नियमितता स्थिरपरिक्रमणकाल एव प्रतीयते, यस्या एकसमाप्तेरनन्तरं तादृशी घटना पुनर्घटिता भवति। ''परिक्रमा-कालानां ज्ञानावाप्ति:'' ज्यौतिषसिद्धान्तस्य प्रथम: स्वरूप आसीत्।

**क्रान्तिवृत्तस्य (Ecliptic) आविष्कार: —**

पेनकाकस्य वक्तव्यानुसारं ग्रहपरिवृत्तीनाम् (भगणपूर्तिकालानाम्) आविष्कारे खाल्दियनानां प्रथमभूमिका आसीत्। ते क्रान्तिवृत्तस्याविष्कारं कया रीत्या अकुर्वन् इत्येको मनोरञ्जको विषयोऽस्ति। ग्रहणचक्रस्य वा सैरोसस्य आविष्कारानन्तरमेव सूर्यस्य भ्रमणमार्गस्याविष्कारोऽभूत्। ग्रहणचक्रस्याविष्कारस्य वर्णनं पूर्वमेव कृतमस्ति।

चन्द्रग्रहणानां पुन: पुन: वेधं कुर्वन्तो जना इदं निश्चितवन्तो यत् चन्द्रग्रहणं येषां नक्षत्राणां पार्श्वे भवति त एव आकाशे सूर्यस्य मार्गाणि सन्ति यत: चन्द्रमस: सूर्यस्य च भ्रमणमार्गे अन्योन्यस्य ५ अंशानां कोणं प्रकुर्वन्तौ कटेते, एवं तयो: कटबिन्दू राहु-केतु-नाम्ना प्रसिद्धौ स्त:। तदा या पूर्णिमा राहो: अथवा केतो: समीपे भवति तस्यामेव चन्द्रग्रहणस्य दृष्टिगोचरसम्भावना भवति। फलतो रविमार्ग एव राहो: केतोश्च बिन्दुसमीपे चन्द्रग्रहणो दृष्टिगोचरो भविष्यति। अतोऽयं निश्चयो यद् यानि नक्षत्राणि चन्द्रग्रहणकाले राहो: केतोश्च बिन्दूपरि दृष्टिगोचराणि भवन्ति तानि सूर्यस्य भ्रमणमार्गस्य समतले सन्ति। इत्थं सूर्यस्य भ्रमणमार्गम् 'इक्लीप्टिक' - नाम्ना अथवा 'इक्लीप्स' नाम्ना अभिहितम्। भारतेऽस्य 'क्रान्तिवृत्त' इति संज्ञा अस्मात् कारणाज्जाता यद् विषुवद्वृत्तात् सूर्यस्य दक्षिणम् अथवा उत्तरं च गमनमनया क्रान्त्या एव भवति।

**नाडीवृत्तस्य (Equater) आविष्कार: —**

कोणमापनविधेर्ज्ञानस्यायमेव परिणाम आसीद् यद् आकाशीयपिण्डानां गतिनिर्धारणं सम्यग्रूपेण जातम्। कोणमापकयन्त्राणां निर्माणं विधाय ज्योतिर्विदो विद्वांस: चन्द्रमस: सूर्यस्य च गतीनां यथार्थरूपेण गणनां कुर्वन्ति स्म। प्रथमत: सूर्यस्य गतेर्गणनया य: परिणाम: समायात: स आकाशे सूर्यस्य उत्तरदक्षिणदिग्गमनस्य सीमानिर्धारणमासीत्। मध्याह्नकाले प्रतिदिनं सूर्यस्य नमनकोणानामाकलनेनायं निश्चयो जातो यद् यदा सूर्यस्य दक्षिणे परमगमनं भवति तदा दिनं लघुतमं (सर्वतो लघु) भवति एवं तदाप्रभृति सूर्य: क्षितिजे उत्तरं प्रति गमनमारभते। तदा प्रभृति प्रतिदिनमस्य मध्याह्नकालिकनमनकोणे न्यूनता

भवितुमारभते, एवं च दिनमेकमेतादृशं भवति यदा सूर्यस्य नमनकोणः सर्वतो लघु भवति। अस्य दिनस्य मानं सर्वतो महद् (महत्तमं) भवति सूर्यश्च प्रातःकाले क्षितिजवृत्ते स्वकीयोत्तरगमनसीमां समाप्य दक्षिणदिशं प्रति गमनं (वर्द्धनं) प्रारभते। अयमेव दक्षिणायनारम्भः कथ्यते। अनयोर्द्वयोर्मध्ये दिनमेकमेतादृशमागच्छति यदा दिनस्य मानं रात्रेश्च मानं समं भवति। इमं कालं 'विषुवत्काल' इति कथ्यते। अयमेकस्मिन् वर्षे वारद्वयम् आयाति।

**म.म.पण्डितसुधाकरद्विवेदिमहोदयानां मतानुसारेण वराहमिहिरस्य जीवनवृत्तम्—**

आदित्यदासतनयोऽयं काम्पिल्लके (कालपीनगरे) सूर्यदेवताया वरप्रसादमवाप्य स्वपितुर्ज्यौतिषसिद्धान्तं समधीत्यावन्तिकायां तत्रत्यनृपतिनः समादरमासाद्य लघुजातकम्, बृहज्जातकम्, विवाहपटलम्, बृहत्संहिताम्, योगयात्राम्, पञ्चसिद्धान्तिकाञ्च व्यरचयत्। अनेकेषां मतेन यथा लघुबृहन्नामभेदेन जातकद्वयमकारि वराहेण, तथैव लघुबृहत्कृतभेदेन ''लघुसंहितायाः'' अर्थात् समाससंहितायाः कर्त्ता च वराहः। केचित् 'काम्पिल्लके' इत्यत्र 'कापित्थके' इति पाठं वदन्ति।

**आदित्यदासतनयस्तदवाप्तबोधः**
**काम्पिल्लके सवितृलब्धवरप्रसादः ।**
**आवन्तिको मुनिमतान्यवलोक्य सम्यग्**
**घोरां वराहमिहिरो रुचिरां चकार ।।** (बृहज्जातके—१६।५)

भट्टोत्पलमतेनायं मगधद्विजः। केषाञ्चिन्मतेऽयं मगधद्विजः, अर्थात् सूर्योपासको ब्राह्मणः। जीविकार्थं मगधादुज्जयिनीं गतस्य वराहस्य मगधद्विजत्वमसम्भवं न। एके मगधे स्वगेहे निजपितुः सम्यग् ज्यौतिषमधीत्याऽऽर्यभट्टादिसिद्धान्तं चावगम्य धनार्जनार्थं यशोलाभार्थं च देशाटनं कुर्वता वराहेण काम्पिल्लके सूर्यदेवाराधनेन वरप्रसादमासाद्य परम्परया विक्रमनरपतिविभूषितामवन्तिकामवाप्य तत्र वसतिः कृतेति निगदन्ति।

यथा सम्प्रति यूरोपीयभाषामधीत्य सुधियः प्रसिद्धा भवन्ति तथैव वराहोऽपि स्वसमये यवनभाषामधीत्य नृपसभासु स्वप्रसिद्धिं कारयामासेति संहितायां गर्गवचनेन ज्ञायते। यथा—

**म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम्।**
**ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्देवविद् द्विजः ।।**

अनेन यवनोत्कर्षवर्णनाद् बृहज्जातके ''क्रियतावुरिजितुम्'' इत्यादिश्लोकेन यवनभाषायां राशिनामोल्लेखाच्च ज्ञायते।

सिद्धान्तरीत्या कल्पादेरहर्गणसाधने गणिताधिक्यात् क्लेशो भवति तदुपाकरणाय कमपि सिद्धान्तमवलम्ब्य गणकाः करणग्रन्थान् विरचयन्ति तत्रापि यदा गताब्दा अधिका

भवन्ति तदा अहर्गणसाधने तथैव क्लेशोऽतः पुनस्तदपाकरणार्थं नव्या नवं करणं कुर्वन्ति। एवं स्वसमये पञ्चसिद्धान्तिकायां ''सप्ताश्विवेदसंख्यं शककालमपास्ये''त्यादिना रोमकसिद्धान्तानुसारेणाहर्गणं गणयता वराहेण रोमकसिद्धान्तरचनाकालात् सप्ताश्विवेदमित-(४२७) शकादहर्गणः साधित इति वदतां डॉ. भाऊदाज्यादीनां मतं युक्तिशून्यं प्रतिभाति, भारतवर्षे सकलकरणग्रन्थेषु करणारम्भशकादेवाहर्गणसाधनदर्शनात्। वस्तुतः खण्ड-खाद्यकरणटीकायामामराजोक्तस्य ''नवाधिकपञ्चशतसंख्याके शाके (५०९) वराहमिहिराचार्यो दिवं गत'' इत्यस्य लेखस्य न किमपि प्रमाणम्। न ह्यन्योक्तवचनप्रामाण्यादाचार्यवचनाप्रामाण्यम्। यदि पञ्चसिद्धान्तिकारचनाकाले वराहस्य वयोऽष्टादशवर्षसमं कल्प्यते तदा तज्जन्मशकः (४०९) निधनसमयश्च आमराजोक्त एव गृह्यते तदा वराहस्य पूर्णायुः शतमायाति तन्न हि असम्भवम्—बहुश्रुते बहुविषयचतुरे मगधादागते बहुकृति कर्त्तरि वराहे। अथवा आत्मजन्मयोगपरिचयार्थं स्वजन्मशकाद् अहर्गणसाधनं कृतमाचार्येणेति बहूनां मतमपि नाऽसम्भवम्; परन्तु रोमकसिद्धान्तारम्भकालादहर्गणसाधने न काचिद्युक्तिरुत्पद्यते।

आलवीरुनी-नाम्नाऽपि पञ्चसिद्धान्तिकासमयस्तत्र लिखितः सप्तद्विवेदमितः (४२७) शक एव स्वीकृतः। यद्यपि देशाटनं कुर्वतो विदेशीयस्य आलवीरुनीनाम्नो जनस्य लेखो न प्रामाणिकस्तथापि तत्समये सर्वत्रैव पञ्चसिद्धान्तिकाया प्रचारात् तज्ज्ञानां च विदुषामाधिक्याद् भारते करणग्रन्थरीत्यनुसारतश्च तल्लेखे न संशयः। आधुनिकस्य ज्योतिर्विदाभरणकृतो गणकस्य कालिदासस्याप्रामाणिकं लेखमवलम्ब्य डॉ. कर्णेनाम्ना बृहत्संहिताभूमिका व्यर्थं विस्तारिता। वराहानन्तरं सार्धसप्तशतैर्वर्षैः (७५०) उद्भवस्य वराहादिविषयकलेखेषु परस्परमसङ्गतेषु कपोलकल्पितेषु च न किमपि वाक्यं प्रामाणिकमिति मन्मतम्।

**वक्रानुवक्रास्तमयोदयाद्यास्ताराग्रहाणां करणे मयोक्ताः ।**
**होरागतं विस्तरतश्च जन्मयात्राविवाहैः सह पूर्वमुक्तम्।।**
(बृहत्सं. १।१०)

इत्यनेन यद्यप्यस्य सर्वासां कृतीनां नामानि न स्पष्टानि भवन्ति तथापि वराहस्यान्तिमा कृतिः बृहत्संहिता एवेति स्फुटं तेन श्लोकेन।

लघुजातकं भट्टोत्पलटीकासहितं तथैव बृहज्जातकं च सम्प्रति फलितज्ञानां दैवज्ञानां गृहेषु सर्वत्रैव लिखितं मुद्रितं चोपलभ्यते। मिथिलाप्रान्तेषु लघुजातकस्य काश्यां च बृहज्जातकस्य विशेषरूपेण प्रचारो वर्तते। बृहत्संहिता च डॉ. कर्णेमहाशयस्य भूमिकया सह मुद्रणकालात् (सन् १८६४ ई.) विशेषरूपेण प्रसिद्धा। ''समाससंहिता'' अद्यावधि नोपलब्धा। योगयात्रा-विवाहपटल इत्येतौ ग्रन्थौ प्रयासबहुलेन काश्यां पण्डितश्यामाचरण-शास्त्रिणो ज्योतिर्विदो गृहे मया अवलोकितौ यत्र यात्रा-विवाहयोः मुहूर्त्तमस्ति। पञ्चसिद्धान्तिका च बह्वायासेन डॉ. थिबोमहाशयेन मया च यथासम्भवं संशोध्य नवीनां टीकां विरचय्य

मुद्रिता। अस्या अन्या प्रतिः अद्यावधि नोपलब्धा। फलग्रन्थेषु विवाहपटलस्यानेकानि वाक्यान्युपलभ्यन्ते (पद्मनाभमिश्रस्य वर्णनमवलोकनीयम्)। यथा शास्त्रान्तरे अध्याया भवन्ति तथा तन्त्रशास्त्रे अध्यायस्थाने पटलं लिख्यते, तेन तान्त्रिकलेखानुसारेण विवाहपटलेन विवाहाध्यायो गृह्यते। यथा— दुर्गापटलम्, कालीपटलमित्यादि (बृहत्संहितायां डॉ. कर्णेमहाशयस्य भूमिका २५ पृष्ठे द्रष्टव्या)। बृहज्जातकोपरि भट्टोत्पलस्य, महीधरस्य, महादेवस्य च टीका प्रसिद्धा। एका केरली टीका च दशाध्यायी-नाम्नी दुर्लभा अस्ति। भूरि श्रमेण लेखकेन सह सम्पर्कं विधाय राजकीयसंस्कृतपुस्तकालयेऽस्याः प्रतेः स्थापनार्थं मया लेखकः प्रोत्साहितः।

अस्यां टीकायां गोविन्देनाऽपि बृहज्जातकस्य टीका कृतेति लिखितमस्ति। अत्र प्रथमश्लोकटीकायां ''चन्द्रो जलमर्कोऽग्निरित्यादि'' सूर्यभट्टस्य, भगवत्पादाचार्यवेदान्ताचार्यस्य गोविन्दस्य, हलधरस्य, श्रीपतेः, सारावलीकारस्य, कृष्णाचार्यस्य, भट्टोत्पलस्य, आर्यभटस्य, ''सिंहो वृषः प्रथममेषम्'' इत्यादिचतुर्दशश्लोकटीकायाम्—विद्यामाधवस्य, वसिष्ठस्य, पराशरहोरायाः, वादरायणस्य, यवनेश्वरस्य, एकोनविंशतिश्लोकटीकायाम्—''शशिकृतनभरामैराहता राशिजीवा'' इत्यादि, तथा—

**शून्याद्रिरसरूपाणि भूतरन्ध्रमुनीन्दवः ।**

**पञ्चाग्निरन्ध्रशशिनो मेषादीनां निरक्षजाः ।।**

चरप्राण'' इत्यादि भास्करस्य, विद्वज्जनवल्लभाख्यस्य, द्वितीयाध्यायान्तिमश्लोकटीकायाम्—

**''कदाचिद् ब्रह्मसिद्धान्तः सावित्रस्तु कदाचन ।**

**कदाचिद्रोमशः स्पष्टो न कदाचित्तथेतरौ ।।**

(इतरौ ब्राह्मवासिष्ठौ) इति पराशरस्य,

**''अनिमिषपरमांशके विलग्ने शशितनये गवि पञ्चवर्गलिप्ते''।**

इत्यादिश्लोकटीकायां ''वृषस्य पञ्चविंशतिकलायां कदा बुधो भविष्यति— एतदर्थमाचार्येण पञ्चसिद्धान्तिका विनिर्मिता। यदि पञ्चानां मतेन बुधः पञ्चविंशतिकलायामागच्छेत् तर्हि समीचीन एवान्यथा येन दृग्गणितैक्यं भवेत्तेनैव साध्यः'' इति तत्कृतदशमाध्यायारम्भे ''तथा चाऽऽचार्यपुत्रेणोक्तम्'', ''यो यो भावः स्वामिदृष्टो युतो वा'' इत्यादि षट्पञ्चाशिकाकारस्य पृथुयशसो वचनान्युपलभ्यन्ते।

अथ वराहेणाष्टपञ्चाशत्तमेऽध्याये ४४तमेन श्लोकेन—

**''पद्माङ्कितकरचरणः प्रसन्नमूर्तिः सुनीचकेशश्च।**

**पद्मासनोपविष्टः पितेव जगतो भवेद् बुद्धः''।।**

इत्यनेन बुद्धप्रतिमालक्षणम्, ४५तमेन श्लोकेन—

**''आजानुलम्बबाहुः श्रीवत्साङ्कः प्रशान्तमूर्तिश्च ।**

**दिग्वासास्तरुणो रूपवांश्च कार्योऽर्हतां देवः'' ।।**

इत्यनेन चार्हद्देवप्रतिमालक्षणं चोक्तमिति वैदिकधर्म्मावलम्बिनां न रीतिरिति वदतां मतं न तथ्यम्, प्रतिमालक्षणं कर्तुं प्रवृत्तस्य विदुषः सर्वलक्षणवर्णनावश्यकत्वात्।

**लङ्कार्धरात्रसमये दिनप्रवृत्तिं जगाद चार्यभटः ।**

**भूयः स एव सूर्योदयात् प्रभृत्याह लङ्कायाम् ।।** (पञ्चसि. १५।२०)

इत्यनेन वराहेणार्यभटस्य दिनप्रवृत्तौ मतद्वयं कथितं परन्तु आर्यभटीयतन्त्रे दशगीतिकासूत्रे सूर्योदयादेव दिनप्रवृत्तिर्लिखिता, अन्यस्य मतस्य चर्चा न कुत्रापि वर्तते। वराहेण पञ्चसिद्धान्तिकायां बहवो गणितस्कन्धविशेषा विहितास्ते च विस्तरभयान्न लिख्यन्ते। वराहस्य सर्वे ग्रन्थाः प्रकटयन्ति ज्यौतिषस्कन्धत्रयेऽद्वितीयं पाण्डित्यं सर्वजनमनस्तोषकरं काव्यकलाकलापवैभवं च। मन्मते वराहार्यभटौ समकालिकौ, मगधराजधान्यां वराहः आर्यभटमतं सम्यग् विज्ञाय ततोऽवन्तीं गत इति।

**अन्यच्च केचिदूचुः —**

वराहस्य समयनिर्धारणक्रमे विचार्यते यद् वर्तमानवत्सरे अयनांशे २२°-९'-२४" विकलाः प्रवहमानाः सन्ति। क्रान्तिपातस्य वात्सरिकी ५०".१ विकला स्थिरीकृत्य गणितकरणेन ज्ञायते यद् वर्तमानकालात् प्रायेण १५९२ वर्षपूर्वं वराहमिहिराचार्य आसीत्। अस्या उपपत्तेः समर्थने विलायतदेशस्य मिश्रदेशस्य च विख्यातज्योतिर्विदो 'हिपार्क़स' महोदयस्य गगनदर्शनफलं वक्ष्यते।

हिपार्कसमहोदयेन लिखितमस्ति यत् तस्य समये चित्रानक्षत्रं क्रान्तिपातबिन्दुतः ६° अंशाः पश्चिमे आसीत्, एवं हार्सेलमहोदयेन लिखितं यद् १७५० ईशवीयस्य प्रारम्भकाले उक्तनक्षत्रं (चित्रानक्षत्रम्) क्रांतिपातबिन्दुतः २०° अंश २४' कला पूर्वेऽग्रसर आसीत्। अतो हिपार्कसमहोदयस्य समयाद् हार्सेलमहोदयस्य समयं यावत् क्रान्तिपातबिन्दुः २६° अंश २४' कला पूर्वस्मिन् अग्रसरोऽस्ति। अत एव सूक्ष्मगणितमतेन ज्ञायते यद् हिपार्कसमहोदयेन हार्सेलमहाशयात् १८९७ वर्षाणि पूर्वम् अर्थात् १४७ ई. वर्षतः पूर्वम् आकाशस्य दर्शनं कृतमासीत्। हिपार्कससमये चित्रानक्षत्रं राशिचक्रस्य १७४° अंशे स्थितमासीत्; परन्तु सूर्यसिद्धान्तलेखकसमये वराहस्य समये च ६° अंशाः पूर्वेऽग्रसरोऽस्ति, अर्थात् क्रान्तिपातः चित्रानक्षत्रं च राशिचक्रस्य एकस्मिन् स्थाने वा १८०° अंशे स्थितमासीत्। अतोऽयनस्य वात्सरिकी गतिः ५०.१ विकला स्थिरीकृत्य गणितक्रियया ज्ञातुं शक्यते यत् सूर्यसिद्धान्तस्य लेखकं एवं वराहश्च हिपार्कसात् ४३१ वर्षाणि पश्चाद् अर्थात् सन् २८४ ई. वर्ष उत्पन्नौ। पूर्वमेवोक्तं यत् पराशरीलेखको वराहात् १६७६ वर्षाणि पूर्वमेव ऋतूनामवस्थानं प्रकाशितवान्। अतः स ईशवीयवर्षतः १३९२ वर्षाणि पूर्वं जातः।

सूर्यसिद्धान्तग्रन्थे प्रदर्शितस्य तत्कालीननक्षत्रावस्थानस्यावलोकनेन ज्ञायते यद् वराहसमयकाल एव तन्निर्मितम्। वराहेण स्वपञ्चसिद्धान्तिकायां सौरसिद्धान्तस्य नामोल्लेखः कृतः। अनेन निश्चयो भवति यत् सूर्यसिद्धान्तस्य रचयिता वराहो नास्ति। सूर्यसिद्धान्तो वराहस्य पित्रा आदित्यदासेन रचित इति ज्ञायते, पाठकानामवलोकनार्थं सूर्यसिद्धान्तस्य ब्रह्मगुप्तस्य च नक्षत्रावस्थानं प्रदर्श्यते।

| नक्षत्र | कल्पित आकार | सूर्यसिद्धान्त-लिखित ध्रुवक पूर्व-पश्चिम | ब्रह्मगुप्तलिखित ध्रुवक | अक्षांस उत्तर वा दक्षिण | प्रत्येक नक्षत्र के आरम्भ से योग-तारे की दूरता | प्रत्येक नक्षत्र में नक्षत्र-संख्या | संख्या एकादि क्रम से |
|---|---|---|---|---|---|---|---|
| अश्विनी | तुरंगमुख | ८° | ८ | १० उ | ४८ उ. | ३ | १ |
| भरणी | योनि | २° | २° | १२ उ. | ४० द. | ३ | २ |
| कृत्तिका | क्षुर | ३७°-३०’ | ३७.२८ | ४०-३० उ. | ६५ द. | ६ | ३ |
| रोहिणी | शकट | ४९°-३०’ | ४९.२८ | ४०-३० द. | ५७ पू. | ५ | ४ |
| मृगशिरा | हरिणमुख | ६३ | ६३ | १० द. | ५८ उ. | ३ | ५ |
| आर्द्रा | रत्न | ६७°-२०’ | ६७ | ११ द. | ४ मध्य | १ | ६ |
| पुनर्वसु | गृह | ९३° | ९३ | ६ उ. | ७८ द. | ४ | ७ |
| पुष्य | बाण | १०६ | १०६ | उत्तर | ७६ मध्य | ७ | ८ |
| आश्लेषा | चक्र | १०९ | १०८ | ७° द. | १४ पू. | ५ | ९ |
| मघा | गृह | १२९ | १२९ | ० उ. | ५४ द. | ८ | १० |
| पूर्वाफाल्गुनी | शय्या | १४४ | १४७ | १२° उ. | ४६ उ. | २ | ११ |
| उत्तराफाल्गुनी | शय्या | १५५ | १५५ | १३ उ. | ५० उ. | २ | १२ |
| हस्त | हस्त | १७० | १७० | ११° द. | ६० | ५ | १३ |
| चित्रा | मुक्ता व प्रदीप | १८० | १०३ | २० द. | ४० | १ | १४ |
| स्वाती | प्रवाल | १९९ | १९९ | ३७° उ. | ७४ | १ | १५ |
| विशाखा | तोरण | २१३ | २१२.५ | १३० उ. | ७८ उ. | ४ | १६ |
| अनुराधा | बलि | २२४ | २२४.५ | १°-४४’द. | ६४ मध्य | ४ | १७ |
| ज्येष्ठा | कुन्तल | २२९° | २२९.५ | ४° द. | १४ मध्य | ३ | १८ |
| | | | | ३-३० द. | | | |
| मूल | क्रोधित केशरी | २४१ | २४१ | ८°-३०’द. | ६ पू. | ११ | १९ |
| पूर्वाषाढ़ा | शय्या | २५४° | २५४ | ५°-३०द. | ४३ | ४ | २० |
| उत्तराषाढ़ा | हस्तिविलास | २६०° | २६०° | ५द. | पूर्वाषाढ़ा का | | |
| | | | | | मध्य नक्षत्र उ. | २ | २१ |
| अभिजित् | त्रिकोण | ६६°-४०’ | २६५ | ६०° उ. | पूर्वाषाढ़ा का | | |
| | | | | | शेष उज्ज्वल | ३ | |
| | | | | ६२ उ. | | | |
| श्रवण | त्रिविक्रम | २८० | २७८ | ३० उ. | उत्तराषाढ़ा | | |
| | | | | | के शेष मध्य में | ३ | २२ |
| धनिष्ठा | मृदंग | २९० | २९० | ३६ उ. | श्रवण का | | |
| | | | | | शेषपाद पश्चिम | ४ | २३ |
| शतभिषा | वृत्त | ३२० | ३२० | ०°-३०’ द. | ८० उज्ज्वल | १०० | २४ |
| | | | | ०°-१८’ द. | | | |
| | | | | ०-२०’ द. | | १०० | |
| पूर्वाभाद्रपद | यमल | ३३६° | ३२६ | २४° उ. | ३६ उ. | २ | २५ |
| उत्तराभाद्रपद | शय्या | ३३७ | ३२७ | २६° उ. | २२ उ. | २ | २६ |
| रेवती | मुरज | ८५९°-५०’ | ३६०° | ३० | ७९ द. | ३२ | २७ |

## अन्य प्रधान नक्षत्रों के ध्रुवक व अक्षांस

| नक्षत्र | अंग्रेजी नाम | सूर्यसिद्धान्त तथा ब्रह्मगुप्त के मत से ध्रुवक | सिद्धान्तसार्वभौम के मत से ध्रुवक | ग्रहलाघव के मत से ध्रुवक | अक्षांस १ के मत से दक्षिण वा उत्तर | अक्षांस २ के मत से दक्षिण वा उत्तर | अक्षांस ३ के मत से दक्षिण वा उत्तर |
|---|---|---|---|---|---|---|---|
| अगस्त्य | Conopus | ९० ]<br>८७ ] | ८५.५ | ८० | ८० द. ]<br>७७ द. ] | ७७०-६<br>द. | ७६ द. |
| लुब्धक | Sirius<br>वेटा | ८० ]<br>८६ ] | ८४-७६ | ८० | ४० द. | ४०'-५द. | ४०° द. |
| अग्नि | Tauri | ५२ | ५७-४ | ४३ | ८ उ. | ८-१४ | ८ उ. |
| ब्रह्महृदय | Capella | ५२ | ५८-३६ | ५६ | ३० उ. | ३०.४९ | ३१ उ. |
| प्रजापति डेल्टा | Aurigi | ५७ | ५६-५३ | ६१ | ३७ उ. | ३८.३० | ३१ उ. |
| आयर वसे ]<br>आय: ] | डेल्टा<br>Virginis | १८० | १८० | १८३ | ३ ]<br>९ ] | ३ | ३९ उ. ]<br>३उ. ] |
| ऋतु | — | — | — | — | ५५ उ. | — | — |
| पुलह | — | — | — | — | ५० उ. | — | — |
| अत्रि | — | — | — | — | ५६ उ. | — | — |
| अंगिरस | — | — | — | — | ५७ उ. | — | — |
| वशिष्ठ | — | — | — | — | ६० उ. | — | — |
| मरीचि | — | — | — | — | ६० | — | — |
| पुलस्त्य | — | — | — | — | ५० उ. | — | — |

सूर्यसिद्धान्तानुसारम् अयनस्य वार्षिकी गतिः ५४'' विकला अस्ति। पराशर-आर्यभट्टयोर्मतानुसारं प्रतिवत्सरम् अयनः क्रमशः ५२'-३ठ एवं ५२'-१ठ विकला पूर्वे अग्रेसरति। पराशरसंहितैव आर्यभट्टसिद्धान्तस्य मूलभित्तिरस्ति। अयनस्य चलायमानावस्था-प्रवर्तकः पराशर्याः लेखकोऽस्ति। तन्मतेन अयनचक्रं मेषराशेः २७° अंशात् पूर्वपश्चिमयो-र्मध्ये दोलायमानं भवति। पराशरीग्रन्थे लिखितेन गगनदर्शनसिद्धान्तेन सह आर्यभट्टः स्वकीयं गगनदर्शनं निरीक्षितवान्। आर्य्याष्टशतिकाग्रन्थे अनेनायनविषय एकं भिन्नमतमुल्लिखितम्। तन्मतेन अयनचक्रम् २४° अंशपरिमाणे उभयतो गच्छति। अत इदं ज्ञायते यद् यदा अयनचक्रः पश्चिमबिन्दुतः २४ अंशपरिमाणम् अग्रेसरो भवति तदा स जन्म लेभे। सूर्यसिद्धान्तलेखकस्य समये वराहस्य च समये अयनचक्रः पश्चिमबिन्दुतः २७°अंशे अग्रेसर आसीत्। अत एव आर्यभट्टसमये अयनचक्रो मेषस्य पश्चिमे ३° अंशे आसीत्। अनेन कारणेन सिद्ध्यति यद् आर्यभट्टो वराहात् २१५ वर्षाणि पूर्वम् अर्थात् शकाब्दाद् नववर्षाणि पूर्वं जन्म लेभे।

गर्गसंहिता अपि ज्यौतिषस्यैकः प्राचीनग्रन्थोऽस्ति। वराहेण बृहत्संहितायां पुनः पुनः ग्रन्थस्यास्योल्लेखः कृतः। गर्गोऽप्ययनविषये किञ्चित् लिखितवान् किन्तु तेन पराशरीत एतद्विषयं गृहीतमिति ज्ञायते। यथा पराशरः —

**यदा प्राप्तो वैष्णवान्तमुदग्भागे प्रपद्यते ।**
**दक्षिणेऽश्लेषां वा महाभयाय ।।**
**गर्गः —**
**यदा निवर्तते प्राप्तः श्रविष्ठामुत्तरायणे ।**
**आश्लेषां दक्षिणोऽप्राप्तस्तावविद्यान् महद्भयम्।।**

अनयोर्द्वयोरपि अर्थः समानः। धनिष्ठान्तगमनेन सूर्यस्योत्तरायणं भवति। आश्लेषान्तगमनेन दक्षिणायनं भवति। क्रान्तिपातस्य परिधिवत् परिभ्रमणं हिन्दूज्योतिर्विदां मध्ये वशिष्ठसिद्धान्तस्य लेखकेन विष्णुचन्द्रेन सर्वप्रथमं प्रकटीकृतम्। तस्य मतमस्ति यत् क्रान्तिपात एकस्मिन् कल्पे १८९४११ वारं प्रतिभ्रमति। अत एव ज्ञायते यत् तन्मतेन अयनं प्रतिवर्षम् ६०''.०६ विकला पूर्वमग्रेसरति। इदं मतं ग्रीसदेशीयहिपार्कस-टेलिमी इत्यनयोर्ज्योतिर्विदोर्ग्रन्थाभ्यां गृहीतमस्ति वा स्वयम् आर्यज्योतिर्विद्भ्यः प्रकाशितमिति सम्यग् न ज्ञायते; किन्तु द्वाभ्यां ज्योतिर्विद्भ्यां निरूपितायनस्य वात्सरिकीं गतिमवलोक्य ज्ञायते यद् विष्णुचन्द्रेण निरपेक्षभावेन प्रकटितमिदम्। हिपार्कसमतेन क्रान्तिपातः प्रायेण ८५ वर्षेषु अंशमेकम्, टेलिमीमतेन च १०० वर्षेषु अंशमेकमग्रेगच्छति।

वराहमिहिराचार्येण बृहज्जातकग्रन्थे मय-यवन-मणित्थ-शक्ति-सत्य-बली-विष्णुगुप्त-देवस्वामी-सिद्धसेन-जीवशर्म्मा-पृथुयशा इत्यादीनामनेकेषां ज्योतिर्विदां नामोल्लेखः कृतः। एते विद्वांसो वराहस्य पूर्ववर्तिन आसन्। वराहेणेदमपि स्वीकृतं यद् ज्यौतिषशास्त्रे यवना अपि दक्षा आसन्। तेनोक्तम्—

**''म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।**
**ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविद्द्विजः'' ।।**

अनेनानुमीयते यद् मिश्रदेशीयैर्ज्योतिर्विद्भिर्वराहस्य मित्रता आसीत्।

बृहत्संहितायामस्यां प्रथमखण्डे वक्ष्यमाणा विषया अध्यायानुसारेण वर्तन्ते—

| अध्यायाः | विषयाः | अध्यायाः | विषयाः |
|---|---|---|---|
| १. | उपनयनाध्यायः | ६. | भौमचारः |
| २. | सांवत्सरसूत्राध्यायः | ७. | बुधचारः |
| ३. | आदित्यचारः | ८. | बृहस्पतिचारः |
| ४. | चन्द्रचारः | ९. | शुक्रचारः |
| ५. | राहुचारः | १०. | शनैश्चरचारः |

ग्रन्थस्यास्य द्वितीयसंस्करणस्य प्रकाशनं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनाधिकारिणो **डॉ. हरिश्चन्द्रमणित्रिपाठिनो** महता प्रयासेन सम्पन्नमिति हेतोस्तम्प्रति हार्दिकं धन्यवादं विज्ञापयामि। अन्ये च **डॉ. पारसनाथद्विवेदिनः** (वेदान्तविभागे आचार्याः), **डॉ. गिरिजेशकुमारदीक्षितः** (व्याकरणप्राध्यापकः), **पं. रामसहोदरपाण्डेयश्च** (पूर्व- अनुसन्धानाधिकारी) ग्रन्थस्यास्य प्रकाशने परमसहयोगिनः सन्ति, अतस्तेभ्योऽपि हार्दिकं धन्यवादं विज्ञापयामि।

**वाराणस्याम्**
वसन्तपञ्चम्याम्,
वि. सं. २०५२

**कृष्णचन्द्रद्विवेदी**
आचार्योऽध्यक्षचरश्च, ज्यौतिषविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

●

# भूमिका
## [ प्रथमसंस्करणस्य ]

मिहिरभक्तोऽवन्तिमिहिरो वराहमिहिरो महीयते कर्ता बृहत्संहिताया ज्योतिर्विद्धितायाः। जनको[1] मिहिर(=आदित्य-)दासो गुरुश्चापि। समधिगतमिहिरवरप्रसादेन वराहमिहिरेण वन्दितो मिहिरो ग्रन्थादौ हार्या। यद्यपीदमीयो गुरुर्भिन्नो जनकादिति ज्ञायते पञ्चसिद्धान्तिकाया मङ्गलश्लोकेन,[2] तथापि तत्र 'येनास्मिन् नः कृतो बोधः' इत्येकवचनान्तताऽलं द्वयोरैक्यप्रतिपादनाय। वाराहीसंहितेत्यभिधानान्तरं बृहत्संहितायाः।

द्वादशोत्तरचतुश्शतसंख्याके शाके समजनि जनिरस्य लब्धवर्णस्येत्यनुमानम्। यद्यपि न कृता संख्यावता तेन स्वकीयसमयचर्चा विशदा, तथापि पञ्चसिद्धान्तिकाख्ये करणग्रन्थे निजे समाश्रुतो गणितारम्भाब्दः सप्तविंशत्युत्तरचतुश्शते (४२७) शाके। एवं खलु प्रसिद्ध्यत्येतदीया जनिस्ततः पूर्वम्। तेन बृहज्जातक-बृहद्यात्रा-बृहद्विवाहपटलयात्रेति ग्रन्थत्रयरचना बृहत्संहितातः प्राक् कृतेति स्वयमेवोक्तं बृहत्संहितायाम् (१, १०)। बृहत्संहिता नूनं प्रौढरचनेति संश्रवे पञ्चदशवर्षदेशीयो न प्रभवेत् कर्तुं स ताम् इत्यतोऽपि प्राक् पञ्चाब्दा निर्धारयितुं शक्यन्ते।

नभोगतपिण्डानि प्रभावयन्ति मानवभाग्यमिति शक्यते वक्तुं तद्भाग्यम्। भारते वर्षे सुपुरातनोऽयं विश्वासः। केचन विश्वासमिमं 'बेबिलोन' इत्याख्यदेशात् संप्राप्तं मन्वते। ब्राह्मणग्रन्थेषु सूत्रग्रन्थेषु च नक्षत्रविचारो लभ्यते। पुरोहितवद् भूपः फलितज्योतिर्विदं समाश्रयेदिति धर्मसूत्रेषु विधिः। मागधानां पुरोहितानुचरवर्गाणां फलितज्योतिर्विदां च गणना कौटलीयार्थशास्त्रे नानवद्या। शुभाशुभलक्षणैर्भाविकथनाय, सैन्योत्साहाय, रिपुत्रासाय चापेक्ष्यते फलितज्योतिर्विद् भूपैः। तदुक्तं बृहत्संहितायाम्—

> अप्रदीपा यथा रात्रिरनादित्यं यथा नभः।
> तथाऽसांवत्सरो राजा भ्रमत्यन्ध इवाध्वनि ॥ १, ८।
> नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता।
> चक्षुर्भूतो हि यत्रैष पापं तत्र न विद्यते ॥ १. ११।

---

१. तदुक्तमुपसंहाराध्याये बृहज्जातकस्य तेनैव—
आदित्यदासतनयस्तदवाप्तबोधः कापित्थके सवितृलब्धवरप्रसादः। ९।

२. दिनकरवसिष्ठपूर्वान् विविधमुनीन् भावतः प्रणम्यादौ।
जनकं गुरुं च शास्त्रे येनास्मिन् नः कृतो बोधः॥

अभूवन् फलितज्योतिषविषयका बहवो ग्रन्थाः प्रागिति नास्ति संशीतिलेशः। पाणिनीयाष्टाध्याय्या महत्त्वेन पूर्ववर्तिव्याकरणग्रन्थलोपवद् वराहमिहिरकृतबृहत्संहिताया महिम्ना प्रायः समे सुपुरातना ज्योतिर्विषयका ग्रन्थास्तिरोहिताः। वराहमिहिरो गर्गासितदेवलवृद्धगर्गनारदपराशरादीन् पूर्ववर्तिनो ग्रन्थकारान् स्मरति स्वकीये ग्रन्थे। एतेषां ग्रन्थकाराणां ग्रन्थखण्डितांशा लभ्यन्ते। तत्र वृद्धगर्गसंहितायाः गार्गीसंहिताया वा खण्डितांशा आधिक्यतो दृश्यन्ते। ग्रन्थोऽयं ग्रीसदेशीयानां भारतशासनोल्लेखाय सुप्रसिद्धः। खैस्ताब्दात् पूर्वं प्रथमशताब्द्यामुपलभ्यते स्म ग्रन्थरत्नमिदमित्यत्र नास्ति किमपि गमकम्। म्लेच्छयवनेषु फलितज्योतिषशास्त्रं सम्यक् स्थितमिति ते पूज्यन्त ऋषिवत् पुनः किं वक्तव्यं दैवविद्-द्विजस्यार्हणाविषय इति भावार्थकं कथनमस्मिन् ग्रन्थे विद्यते। वराहमिहिरेणापीदृशमेवोक्तं[१] तच्चास्माद् ग्रन्थाद् गृहीतमिति फलितज्योतिषाध्ययनार्थं तद्विदेशगमनकल्पना भ्रान्त्यनिर्लिता, तद्ग्रन्थवर्णितविषयाणां ग्रन्थानां तद्ग्रन्थरचनातः प्रागेव विनिर्मितत्वात्। पूर्वाचार्यग्रन्थालोडनपूर्वकं कृतेयं कृतिः समासत इति प्रतिजानीते स बृहत्संहितायाम्—

आब्रह्मादिविनिःसृतमालोक्य ग्रन्थविस्तरं क्रमशः।
क्रियमाणकमेवैतत् समासतोऽतो ममोत्साहः॥ १, ५।

भूयो वराहमिहिरस्य न युक्तमेतत्
कर्तुं समासकृदसाविति तस्य दोषः।
तज्ज्ञैर्न वाच्यमिदमुक्तफलानुगीति
यद्बर्हिचित्रकमिति प्रथितं वराङ्गम्॥ ४६, २॥

आर्यभटेन गोलपादे भूभ्रमणसिद्धान्तः प्रत्यपादि सर्वतः प्राक् "अनुलोमगतिर्नौस्थः" इति। ब्रह्मसिद्धान्ते ( ११ अध्याये ) ब्रह्मगुप्तेन प्रत्यादेशि सः 'प्राणेनैति कलां भूर्यदि" इति। एवमेव वराहमिहिरेण चन्द्रग्रहणादिविषये प्रदर्शिता स्वोपज्ञता। 'भूच्छायां स्वग्रहणे' ( ५, ८ ) इति प्रतिपादयता तेन चन्द्रग्रहणकारणं भूच्छायेति प्रदर्शितम्। संपूर्णः श्लोकश्चेत्थम्—

भूच्छायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः।
प्रग्रहणमतः पश्चान्नेन्दोर्भानोश्च पूर्वार्द्धात्॥

धीमत्तल्लजो वराहमिहिरः स्वसिद्धान्तस्थापनात् प्राक् प्रचलितपूर्वं 'राहुकृतमर्कचन्द्रयोर्ग्रहणम्' इति सिद्धान्तं निराकृत्य तस्मिन् काले स्वपाण्डित्यं प्रदर्शितवान् सडिण्डिमघोषम्। तत्कृतं खण्डनमवश्यमध्येयम्—

---

१. म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम्।
ऋषिवत् तेऽपि पूज्यन्ते किं पुनर्दैवविद् द्विजः॥ २, १४।

यदि मूर्तो भविचारी शिरोऽथवा भवति मण्डली राहुः ।
भगणार्द्धेनान्तरितौ गृह्णाति कथं नियताचारः ॥ ५, ४ ।
अनियताचारः खलु चेदुपलब्धिः संख्यया कथं तस्य ।
पुच्छाननाभिधानोऽन्तरेण कस्मान्न गृह्णाति ॥ ५, ५ ।
अथ तु भुजगेन्द्ररूपः पुच्छेन मुखेन वा स गृह्णाति ।
मुखपुच्छान्तरसंस्थं स्थगयति कस्मान्न भगणार्द्धम् ॥ ५, ६ ।
राहुद्वयं यदि स्याद् ग्रस्तेऽस्तमितेऽथोदिते चन्द्रे ।
तत्समगतिनान्येन ग्रस्तः सूर्योऽपि दृश्यते ॥ ५, ७ ।

रात्रौ भूच्छायाराहित्येन चन्द्रग्रहणाभाव इत्याशङ्कापि निराकृता तेनेत्थम्—"यथा वृक्षस्य दीर्घचया स्वच्छाया खल्वेकपार्श्वे भवति तद्वद् निशि निशि दिनेशस्य भूमेरावरण-वशाज्ज्ञेया तच्छायेति । प्रतिमासं चन्द्रग्रहणं कुतो नेति शङ्कापि समाहिता (५।१०)। एवं सत्यपि वराहमिहिरेण 'चन्द्रग्रहणकारणं भूच्छाया' इति ज्ञानं पूर्वाचार्येभ्य उपगतमित्यूरीकृतम्—

एवमुपरागकारणमुक्तमिदं दिव्यदृग्भिराचार्यैः ।
राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः ॥ ५, १३ ।

वराहमिहिरो ज्योतिषशास्त्रं त्रिधा विभजते––१. सिद्धान्तज्योतिषं गणितीयाधारश्च । तन्त्रेति नामान्तरम्; २. होरा जन्मपत्रादिकं संबध्नाति । भट्टोत्पलाचार्येण 'होरायाम् = जातके' इति प्रतिपादितं बृहत्संहितायाः (१, ६) टीकायाम् । इदमभिधानं सुस्पष्टं ग्रीकभाषीयम् । ३. संहिता भौतिकफलितज्योतिषं संबध्नाति । यत्र ग्रन्थे कार्त्स्न्येन ज्योतिषशास्त्रवर्णनं सा संहिता (१, ९)। होरा-गणित-संहितेति समुदितं त्रिस्कन्धज्योतिषशास्त्रम् ।

इयं बृहत्संहिता वराहमिहिरप्रणीतग्रन्थेषु मूर्द्धन्यमणिरिव शोभते। तेषु समेष्वियं महिष्ठा । वाराही संहितेत्यभिधानान्तरमस्याः । इह ग्रन्थे महानुभावोऽयं ग्रामं गच्छंस्तृणं स्पृशतीति न्यायेन बहुविधं भूगोलच्छन्दःकाव्यादीनां कोशं संनिवेशितवान् फलितज्योतिषशास्त्रवर्णनपरोऽपि। ग्रन्थस्यास्यानुवाद आरब्यभाषामयोऽलबरूनीमहाशयेन संपादितोऽभिव्यनक्ति ग्रन्थमहिमानं सहस्राब्दीतः पूर्वमितः । सांवत्सरेण विदुषा तेन छन्दसि भाषायां च पूर्णतः प्रदर्शितं वैदुष्यम् । तद्रचनायां यत्र क्वापि साधीयो हि कवित्वयोग्यतासंस्पर्शो विद्वन्मनोहारी। प्रस्तूयते किमपि निदर्शनम् । तत्र विभाव्यतां सौष्ठवं सुधीभिः—

अगस्त्यस्य मुनेः प्राधान्यद्वारेण समुद्रशोभामुपवर्णयितुमाह—

समुद्रोऽन्तःशैलैर्मकरनखरोत्खातशिखरैः
कृतस्तोयोच्छित्त्या सपदि सुतरां येन रुचिरः ।

पतन्मुक्तामिश्रैः प्रवरमणिरत्नाम्बुनिवहैः
सुरान् प्रत्यादेष्टुं मितमुकुटरत्नानिव पुरा ॥ १२, १ ।

भगवतागस्त्यमुनिना पूर्वं जलापहरणेन तत्क्षणमेव सागरो रम्यो विहितः। जलाभावात् तत्रत्याः पर्वता रत्नादिसमलङ्कृतमूर्धानो देवानधरीचक्रुरिवेत्याकूतम्।

शरद्वर्णनचमत्कृतिरतुला। नदीनां प्रत्यहं जलाल्पत्वात् पुलिनानि भवन्ति व्यक्तानि। तानि च हंसैः सेव्यन्ते। पार्श्वद्वयाधिष्ठितचक्रवाकः ( लोहितवर्णाः पक्षिविशेषाः ) सस्वनहंस-पङ्क्तिः शरत् ताम्बूलरक्तोत्कषिताग्रदन्ती योषेव शोभत इत्युत्प्रेक्षते ग्रन्थकारः—

पार्श्वद्वयाधिष्ठितचक्रवाका-
मापुष्णती सस्वनहंसपङ्क्तिम्।
ताम्बूलरक्तोत्कषिताग्रदन्ती
विभाति योषेव शरत् सहासा ॥ १२, ८।

अन्यच्च—

इन्दीवरासन्नसितोत्पलान्विता शरद् भ्रमत्षट्पदपङ्क्तिभूषिता।
सभ्रूलताक्षेपकटाक्षवीक्षणा विदग्धयोषेव विभाति सस्मरा ॥ १२, ६।
इन्दोः पयोदविगमोपहितां विभूतिं द्रष्टुं तरङ्गवलया कुमुदं निशासु।
उन्मूलयत्यलिनिलीनदलं सुपक्ष्म वापी विलोचनमिवासिततारकान्तम् ॥ १२,१०।

भूमेः शोभावर्णनम्—

नानाविचित्राम्बुजहंसकोकारण्डवापूर्णतडागहस्ता।
रत्नैः प्रभूतैः कुसुमैः फलैश्च भूर्यच्छतीवार्घमगस्त्यनाम्ने ॥ १२, ११।

भुजङ्गप्रयातच्छन्दोनिबद्धं मेघवर्णनमिदम्—

तडिद्धेमकक्ष्यैर्बलाकाग्रदन्तैः
स्रवद्वारिदानैश्चलत्प्रान्तहस्तैः।
विचित्रेन्द्रचापध्वजोच्छ्रायशोभै-
स्तमालालिनीलैर्वृतं चाब्दनागैः ॥ २४, १७।

द्रुतविलम्बितच्छन्दोनिबद्धं चैतत्—

सशिखिचातकदर्दुरनिःस्वनै-
र्यदि विमिश्रितमन्द्रपटुस्वनाः।
खमवतत्य दिगन्तविलम्बिनः
सलिलदाः सलिलौघमुचः क्षितौ ॥ २४, १९।

पीताम्बरवेष्टितशरीरस्य भगवतो नन्दनन्दनस्य कान्ति चोरयतां मेघानां वर्णनम्—

सन्ध्यानुरक्ते नभसि स्थिताना-
मिन्दीवरश्यामरुचां घनानाम्।
वृन्दानि पीताम्बरवेष्टितस्य
कान्ति हरेश्चोरयतां यदा वा॥ २४, १८।

इह पेपीय्यतां याथातथ्येन काव्यमाधुर्यम्—

शालीक्षुमत्यपि धरा धरणीधराभ-
धाराधरोज्झितपयःपरिपूर्णवप्रा।
श्रीमत्सरोरुहततताम्बुतडागकीर्णा
योषेव भात्यभिनवाभरणोज्ज्वलाङ्गी॥ १६, १६।

क्षत्रं क्षितौ क्षपितभूरिबलारिपक्ष-
मुद्‌घुष्टनैकजयशब्दविराविताशम्।
संहृष्टशिष्टजनदुष्टविनष्टवर्गां
गां पालयन्त्यवनिपा नगराकराढ्याम्॥ १६, १७।

पेपीयते मधु मधौ सह कामनीभि-
र्जेगीयते श्रवणहारि सवेणुवीणम्।
बोभुज्यतेऽतिथिसुहृत्स्वजनैः सहान्न-
मब्दे सितस्य मदनस्य जयावघोषः॥ १६, १८।

## बृहत्संहिताया भौगोलिकं महत्त्वम्

एवं तावद् ग्रन्थस्यास्य सुविशङ्क्ये विषयवस्तुसीमा। फलितज्योतिषमाहात्म्यवर्णनान्तरं निरूप्यन्ते ग्रन्थकारेण दिवाकरगतिप्रभावाः, चन्द्रगतपरिवर्तनानि ग्रहैः सार्धं च तत्संयोगा ग्रहणानि च। तदनन्तरं विभिन्ननक्षत्राणां प्रभावो मानवभाग्ये केन रूपेण जायत इति समुपवर्णितम्। चतुर्दशेऽध्याये भारतीयभूगोलस्वरूपं तात्कालिकं प्रसङ्गतः समुपस्थापितमिति महते ज्ञानाय तद्विदाम्।

ज्योतिषशास्त्रप्रतिपादनपरेऽस्मिन् ग्रन्थे भूगोलकोशरत्नानि पूर्वस्मिन् खण्डे प्रायशः सर्वत्र विकीर्णानि। तत्र स्मृता देशा जना जनपदाश्च बाहुल्येन न श्रूयन्ते। तेषां केचन प्रस्तूयन्ते—

सुह्मजनाः (५, ३७)। अपरान्ता जनाः (३, ४०; ९, १५), अपरान्तका वा (५, ७०; १४, २०)। सिंहपुरकाः (३, ४२), कुकुराः (५, ७१; १४, ४), कोटिवर्षाः

( ६, ११ ), शूलिकाः ( ६, १५; २१; १०, ७; १४, ८; २३; १६, ३४ )। प्रत्यन्ताः ( ५, ३१; ६, १७; २१; १०, ६ ) = गह्वरवासिनः। चारुदेवयः ( ६, १८ ) = चारुदेवी, नदी तत्तटनिवासिनः। जाङ्गलाः ( ६, २६) — जाङ्गलम् = स्वल्पोदकस्थानम्, तत्र ये निवसन्ति ते। पारतः ( १४, २१ ), पारता जनाः ( १०, ७; १३, ६; १६, ४; १२; २१ ), पारतरा जना वा ( १०, ५ ) = पर्थियनजनाः। आवगाणाः ( ११, ६१; १६, ३७ )। माण्डव्याः ( १४, २; २२; २७ )। उज्जिहानाः ( १४, २ )। असिकाः ( ११, ५६ )। देविका ( ११, ३५ ) = एतन्नामिका नदी। नीपाः ( १४, २ )। गौरग्रीवाः ( १४, ३ )। उद्देहिकाः ( १४, ३ )। पाण्डुगुडाः ( १४, ३ )। पुरिकाः ( १४, १० )। तालिकटाः ( १४, ११ )। सौरिकीर्णाः ( १४, ११ )। फणिकाराः ( १४, १२ ) आवर्त्तकाः ( १४, १२ )। पिशिकाः ( १४, १४ )। कार्मणेयकाः ( १४, १५ )। ऋषिका जनाः ( १४, १५ )। मरुचीपट्टनम् ( १४, १५ ) — तु० मछलीपट्टन इति। चेर्यार्यकाः ( १४, १५ ), तु० ( पाण्ड्य ) — चेरी। बलदेवपट्टनम् ( १४, १५ )। अरवाः (१४, १७) = अरबदेशीयाः। नारीमुखाः (१४, १७)। मार्गराः ( १४, १८ )। कर्णप्रावेयाः ( १४, १८ )। चञ्चूकाः ( १४, १८ )। शान्तिकाः ( १४, २० )। वोक्काणाः ( १४, २०; १६, ३४ )। तारक्षितिः ( १४, २१ )। हलडाः ( १४, २२ )। फल्गुलुकाः ( १४, २३ )। गुलुहाः ( १४, २३ )। मरुकुच्चाः ( १४, २३ )। वसातयः ( १४, २५; १७, १६ )। वाटधानाः ( १४, २६; १६, २१ )। शरधानाः ( १४, २६ )। पुष्कलावताः ( १४, २६ )। कैलावताः ( १४, २६ )। कण्ठधानाः ( १४, २६ )। कच्छाराः ( १४, २७ )। माणहलाः ( १४, २७ )। कोहलाः ( १४, २७ )। डामराः ( १४, ३० )। कुनटाः ( १४, ३० )। गोलाङ्गूलाः ( १६, ३ )। पाराः ( १६, १० )। भासापराः ( १६, ११ )। समन्त्रिषिकाः ( १६, ११ ) — प्रभृतयः। एवमेव नदीपर्वत-नामान्यपि संदृब्धानि तत्र। कस्य ग्रहस्य प्रभावेण के के देशा जनपदा वा प्रभाविताः, वस्तूनि वा प्रभावितानि जायन्त इत्यनूनकं चित्रमुपस्थापितम्। ग्रहगतयो युद्धनिर्णायिकाः, स्वामिग्रहस्य कारणेन संवत्सरस्य शुभाशुभं संपद्यते फलम्। इन्द्रध्वजोत्सवस्य कवित्वपूर्णं वर्णनं द्वाचत्वारिंश-दध्याये विलोकनीयम्। वास्तुविद्या-भूगर्भादिविद्या-प्रासाद-प्रतिमा-गवाश्व-पुरुषलक्षणानि ( ५२-६७ ) वर्णितानि। स्त्रीप्रशंसाध्यायः ( ७३ ) सुभाषितसंग्रहार्हः। यथा—

रत्नानि विभूषयन्ति योषा भूष्यन्ते वनिता न रत्नकान्त्या।
चेतो वनिता हरन्त्यरत्ना नो रत्नानि विनाङ्गनाङ्गसङ्गम्॥ ७३, २।

ब्राह्मणाः पादतो मेध्या गावो मेध्याश्च पृष्ठतः।
अजाश्वा मुखतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः॥ ७३, ८।

आब्रह्मकीटान्तमिदं निबद्धं
पुंस्त्रीप्रयोगेण जगत् समस्तम्।
व्रीडात्र का यत्र चतुर्मुखत्व-
मीशोऽपि लोभाद् गमितो युवत्याः॥ ७३, २०।
यत्राकृतिस्तत्र गुणा वसन्ति॥ ६९, २३।

एतदनन्तरमेकस्मिन् प्रकरणेऽन्तःपुरजीवनवर्णना। तत्र खलु कामसूत्रार्थशास्त्रसादृश्यं दृग्गोचरायते। ततः परं शय्या आस्तरणानि च कथं भवेयुरिति। रत्नानां वर्णनम् ( ७९-८२ ) अध्यायेषु। दीपकदन्तधावनवर्णनोत्तरं शाकुनप्रकरणमेकादशाध्यायेषु। विवाहपटलाद्यनन्तरं शास्त्रानुक्रमणीं विरचय्य समापितो ग्रन्थो ग्रन्थकारेण।

## प्रयुक्तानि च्छन्दांसि

बृहत्संहितायामुपयोजितानि च्छन्दांसि षष्टिसंख्याकानि साहित्यनदीष्णानामप्याश्चर्याय कल्पन्ते। भट्टोत्पलेन टीकाकृता व्याख्यातानि तानि ग्रहगोचराध्याये नयनगोचरीभवन्ति। ग्रन्थस्यास्योत्तरार्द्धे छन्दोनामसूची विलोकनीया। विन्ध्यादिवर्णनप्रसङ्गे गद्यमपि विद्योतते ग्रन्थकृताम्। एवं तावद् गद्यपद्योभयनिबद्धोऽयं ग्रन्थः।

## बृहत्संहिताया भाषा

इह ग्रन्थे प्रयुक्ता संस्कृतभाषा वैलक्षण्यमावहति। शब्दानामर्थविकासः, अन्याभ्यो भाषाभ्यश्च शब्दादानमपि ग्रन्थस्यास्य वैशिष्ट्यम्। पञ्चसिद्धान्तिकायां यत्र संप्रवेशशब्दप्रयोगस्तत्र बृहत्संहितायां संप्रयोगशब्दः ( द्र० ३९ पृ० )। द्वितीयाध्यायस्य द्वितीये श्लोके आर्याशब्दो मातृवाचकः। संस्कृतभाषायामार्येति शब्दो नास्ति मातृवाचकः। महाभारते ( ३, १२, ८७ ) प्राकृतभाषायां च स दृश्यते पूज्यस्त्रीवाचको न तु मातृवाचकः ( द्र० पिशलकृतस्य ग्रामातिक देर प्राकृतस्प्राखेन इत्यभिधस्य ग्रन्थस्य १०६; १४३; १४५ कण्डिकाः )। नाटकेषु श्वश्रूवाचकोऽपि। द्वितीयेऽध्याये (६६ पृ०) अनूकशब्दः प्राग्जन्मवाचकः। अथर्ववेदे ( ४, १४, ८; ९, १३, २१ ), शतपथब्राह्मणे ( ३, ८, ३, २७ ) ऐतरेयब्राह्मणे ( ७, १ ) चानूकशब्दार्थः सास्ना मूत्रवस्तिर्वा 'अनूकं मूत्रवस्तिः स्यात् सास्नेत्येके वदन्ति च' इति। कात्यायनश्रौतसूत्रे ( १६, ७, २२-२४ ) कशेरुकेति तदर्थः। सुश्रुते "व्याघ्रर्क्षनकुलानूकैः पैत्तिका नराः स्मृताः" इत्यत्रानूकशब्दः शीलार्थकः। अमरकोशे, अभिधानरत्नमालायाम् ( ५, ४३ ), वैजयन्त्याम् ( २५०, ५ ), शाश्वतकोशे ( ६७३ ) चानूकशब्दः कुलशीलोभयार्थकः। मेदिनीकोश एवैकलः—'अनूकं तु कुले शीले पुंसि स्याद् गतजन्मनि' इत्यभ्यधात् पुंस्यनूकशब्दं गतजन्मार्थकम्।

राघवकृतनानार्थमञ्जर्यामप्ययमर्थोऽवाप्यत इत्याप्टेमहाशयोऽनवलोकितमेदिनीकोशः। एवं सत्यपि बृहत्संहितागतानूकशब्दो न पुंसि—

"आश्रयभावावलोकननिर्याणगत्यनूकानि" ( २ अ०, ४ श्लोकानन्तरं गद्यम् )।

एतदनन्तरवर्तिनि गद्ये 'गणयाग'-शब्दो द्रष्टव्यः। तदर्थस्तु गुह्यकपूजनम् इति। निषेकशब्दार्थो गर्भाधानम्। निष्ठाप्रत्ययान्तस्य निपूर्वकस्य सिच्-धातोरर्थस्तु प्रक्षेपणात्मकः—

जगति प्रसारितमिवालिखितमिव मतौ निषिक्तमिव हृदये। २, ५।

२, ५ श्लोकानन्तरं गद्ये 'मृगचक्रम्' 'श्वचक्रम्' इत्यादिशब्दगतचक्रपदार्थश्चेष्टितमिति। वातचक्रम् इत्यत्र चक्रशब्दार्थो लक्षणम् इति। अत्रैव नीराजनशब्दः। तदर्थस्तु—नीरेण जलेन मन्त्रपूतेनाजनम् = क्षेपणं स्पर्शनमिति। पुष्यस्नानार्थे घृतकम्बलशब्दः। नृपमुकुटार्थे पट्टशब्दः—पट्टपरीक्षा···। चारोदयाः प्रशस्ताः ( ६, १२ ) इत्यत्र चारशब्दार्थोऽवस्थितिरिति।

सत्यपि भाषाप्रयोगनैपुण्ये वराहमिहिरेण पादपूर्त्यर्थमङ्गीकृताः कतिचन शब्दाः। अथ-शब्दः स्वार्थे ( ४, २४; ८, १६; १०, ११ ), अथ-शब्दः पादपूरणे ( ४, २५; ५, ७४; ८, २६ )।

ग्रन्थकारेण सन्नन्तप्रयोगः—चिभक्षयिषु-(१६, १) इति, यङन्तप्रयोगाः–पेपीयते, जेगीयते, बोभुज्यत इति, यङ्लुक्प्रयोगश्च—नरिनर्ति (१३, २) इति कृताः। तद्धितान्तप्रयोगाणां तु भूयस्त्वम्।

इह होराजामित्रत्रिकोणकेन्द्रादयो ग्रीकभाषायाः शब्दाः सुस्पष्टाः। एतेषां संस्कृतीकरणप्रयत्नो रोचकः। होरा-पणफर-आपोक्लिम-हिबुक-त्रिकोण-जामित्र-मेषूरण-क्रिय-तावुरि-जितुम-लेय-पाथोन-जुक-कौर्प्य-तौक्षिक-आकोकेरो-हृद्रोगेत्थसि-प्रभृतिशब्दाः सन्ति। क्रान्तिवृत्तम् ( राशिचक्रम् ) इत्यादयः शब्दा अनुवादमूलकाः। बृहत्संहितायां तु पञ्चषा एव ते शब्दा गृहीताः। बृहज्जातके तु प्रायः सर्वे प्रयुक्ताः।

संक्षेपतो वराहमिहिरज्ञानस्यानन्त्यविषये नास्ति द्वापरत्वम्। तट्टीकाकारो भट्टोत्पलमहाभागोऽप्यसामर्थ्यं व्यक्तीकरोति बृहत्संहितागतविषयवस्तुतत्त्वव्याख्याने "केवलमक्षराणां व्याख्या क्रियते न चास्माकं तथाविधं प्रावीण्यम्" ( ७६, ४ ) इति।

## विवृतिटीकाकारो भट्टोत्पलः

सुप्रसिद्धोऽयं टीकाकारः कश्मीराभिजनः। खण्डखाद्यटीकाकारेण वरुणेन तु सुस्पष्टमेतस्य कश्मीरीयता साधिता। खण्डखाद्यटीकया सप्तषष्ट्युत्तरपञ्चदशशतशाकीयेन पञ्चाङ्गकौतुकेन च ज्ञायते यद् भट्टोत्पलस्य टीका लब्धप्रचारा कश्मीरेषु। बृहज्जातकटीकायां ८८८ मिते शाके प्रणीतायामनेन तत्प्रणयनकालः ८८८ मितः शाको दर्शितः—

चैत्रमासस्य पञ्चम्यां सितायां गुरुवासरे ।
वस्वष्टाष्ट ८८८ मिते शाके कृतेयं विवृतिर्मया ॥

बृहत्संहिताटीकाकालोऽपीत्थमेव लिखितस्तेन—

फाल्गुनस्य द्वितीयायामसितस्य गुरोर्दिने ।
वस्वष्टाष्टमिते शाके कृतेयं विवृतिर्मया ॥

अनेन वराहमिहिरस्य यात्राबृहज्जातकलघुजातकबृहत्संहितेति ग्रन्थेषु टीकिता टीका । बृहत्संहितान्ते स्वकीयटीकागौरवं तेन स्वयं वर्णितम्—

आचार्यप्रवरस्य बोधजलधेः पारं तितीर्षुर्जनो
व्यामुह्यन्नभिधेयरत्ननिचयैः काङ्क्षंस्तरीं भ्राम्यति ।
इत्येवंविधमाकलय्य करुणामालम्ब्य भट्टोत्पल-
श्चक्रे तत्कृतिसंहिताविवरणं स्थैर्यं प्लवं कीर्तये ॥

वस्तुतः सुपुरातने काले संहिताशाखाविविधविषयज्ञानं भारते वर्षे कियदभूत् ? तज्ज्ञान-संवर्धनं च क्रमशः केन प्रकारेण जातम् ? इत्याद्यैतिह्यबोधनार्थं बृहत्संहिताया उत्पलटीकाऽनन्योपायः । भट्टोत्पलः प्राचीनग्रन्थशोधकस्तद्वाचनं च सुविस्तृतमिति ज्ञायते तट्टीकया बृहत्संहितायाः । वराहमिहिरलिखिता विषया आधिक्यतः प्राचीनग्रन्थेभ्य गृहीता इति तत्र टीकायां दर्शितं पदे पदे तेन । क्वचित् क्वचिच्च तेन तद्ग्रन्थनामान्यपि समुट्टङ्कितानि । प्रसङ्गतश्च प्रायः सर्वत्र तत्तद्विषयकप्राचीनसंहिताकृतामुद्धृतानि वचनानि । क्वचित्त्वेकस्मिन्नेव विषयेऽष्टाधिक-प्राचीनसंहिताकृतां वचनोल्लेखः । सर्वास्ताः संहितास्तदा सुलभा अभूवन्निति सुस्पष्टं विज्ञायते भट्टोत्पलटीकायां तदुद्धरणैः । महामतिना तेन संहिताजातकयोस्तदन्तभेदविषये चानेकपौरुष-ग्रन्थकारनामानि तद्वचनानि च सादरं गृहीतानि टीकायाम् ।

भट्टोत्पलेन ब्रह्मगुप्तकृतखण्डखाद्यटीकापि कृतेति ज्ञायते बृहत्संहिताटीकावचनेन— "खण्डखाद्यकरणेऽस्मदीयवचनम्" इत्यनेन । वराहमिहिरपुत्रस्य पृथुयशसः 'षट्पञ्चाशिका' इति जातकग्रन्थेऽपि लिखिता टीका भट्टोत्पलेन । तस्या एका प्रतिः पूनाकालेजसंग्रहे ( सं० ३५५, सन् १८८२-८३) विद्यते । यात्राग्रन्थटीका नोपलभ्यते संप्रति । खण्डखाद्यटीका भूर्जपत्रलिखितै-तदीया कश्मीरेषूपलब्धा साम्प्रतं डेक्कनकालेजसंग्रहे विद्यते ।

## भट्टोत्पलकृता मौलिका ग्रन्थाः

अनेन महाभागेन टीकातिरिक्ताः स्वतन्त्रा ग्रन्था अपि लिखिता इति प्रथमाध्याये 'अस्मदीयवचनम्' इत्युक्त्वार्यानिर्देशेन ज्ञायते । गणितस्कन्धमधिकृत्य स्वतन्त्रग्रन्थरचनाऽनु-

मीयते। खण्डखाद्यटीकागतमपि शक्नोति भवितुमुक्तवचनम्। द्विसप्तत्यार्यामितः प्रश्नज्ञाननामकः प्रश्नग्रन्थ एतदीयः। अलबेरुनीमहाशयमतानुसारेण 'राहुन्नाकरणम्' इति 'करणपातः' चेति करणग्रन्थद्वयमप्येतदीयम्। बृहन्मानसग्रन्थटीका टीकिताऽनेन। एकेनैव ग्रन्थकारेण रचितस्य करणद्वयस्यासंभवः। उक्तग्रन्थद्वयस्याभिधेयमपि वैचित्र्यमावहतीतीह बेरुनीमहाशयस्य स्यात् कोऽपि भ्रमः।

भट्टोत्पलविरचितः श्रूधव' इत्यभिधोऽप्येको ग्रन्थ इति तन्मतम्। इहापि नाम्नि विद्यते काचित् त्रुटिः। तेनास्य ग्रन्थस्य कालादिमानविषये लिखितम्। श्रूधवेत्यभिधाः सन्त्यन्येऽपि ग्रन्था इति तद्व्याहारः। दत्तेन श्रूधवविषयकेण मनाक् परिचयेन ज्ञायते यद् शकुनसंबद्धौ प्रश्नसंबद्धौ वा भवेतां तौ ग्रन्थाविति। भट्टोत्पलकृतो वास्तुविद्याग्रन्थोऽपीत्यवगम्यते तट्टीकया बृहत्संहितायाः—"तथा चास्मदीयवास्तुविद्यायाम्" ( ५२, ५७ ) इति।

## भट्टोत्पलीया देशभाषा

बृहत्संहितायाष्टीकायां भट्टोत्पलविरचितायां देशभाषीयाः सन्ति प्रयुक्ताः केचन शब्दाः। तेषामध्ययनेन भट्टोत्पलस्य जनिभूः पार्यते निश्चेतुम्। प्रस्तूयन्ते तथाविधा इह कतिचन शब्दाः—

१. जानुकपिच्छे चतुरङ्गुले च चतुरङ्गुलप्रमाणे कार्ये ये च लोके 'एक्कलके' इति प्रसिद्धे ( ५७, १७ )।

२. मृदङ्गो वादित्रो मण्डलेति प्रसिद्धः ( ६७, ६५ )।

३. क्ष्वेडः मुखशब्दः शोडनिकेति प्रसिद्धा ( ८५, ३९ )।

४. भृङ्गारवद् विरुवति वाशति। भृङ्गारो दांदानी दमनी ( ८७, ६ ) इति भृङ्गारो भृङ्गारी वा झिल्लिकेति मे मतम्, वराहमिहिरेणापि 'निशि द्वयङ्गुलशरीरा' इति स्वीकृतत्वात्।

बहोः कालादनुपलब्धं ग्रन्थरत्नमिदं दुर्लभग्रन्थपुनर्मुद्रणयोजनायां केन्द्रीयशिक्षामन्त्रणालयस्य साहाय्येन तत्त्वविदां जिज्ञासूनामुपकारततये साम्प्रतं प्राकाश्यं नीयते। तदर्थं केन्द्रीयशिक्षामन्त्रिमहोदयेभ्यः प्रभूतान् धन्यवादान् समर्पयामि। दुर्लभेयं संहिता वाराणसेयसंस्कृतविश्वविद्यालयीयानुसन्धानविभागेन विद्वद्धिताय शोभनतरं प्रकाश्यमानाऽधुना सुलभा संजातेति महतः प्रमोदस्यावसरः —इति निवेदयते

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी
सावित्री जयन्ती
सं० २०२५,
दि० २७-५-१९६८

बलदेव उपाध्यायः
अनुसन्धानसञ्चालकः



।।श्रीः।।

# अवतारिका

## [ प्रथमसंस्करणस्य ]

श्रीवराहमिहिराचार्यप्रणीता काऽपि ज्योतिर्निबन्धना बृहत्संहिता नाम श्रीभट्टोत्पलरचितेन विवरणेन समन्विता द्वितीयवारं प्रकाश्यते। गणित-संहिता-होराभिधानैस्त्रिभिः स्कन्धैराचिताकृतेः किल महतो ज्योतिश्शास्त्रस्य कोऽप्यन्यतमः स्कन्धो भवति संहिता।

गणित-संहिता-होरेति शाखाभिर्विस्तृतस्याऽस्य ज्योतिश्शास्त्रस्य स्वरूपवर्णनमनेकैराचार्यैर्विस्तरतः कृतमस्ति। तत्रैकैकस्कन्धस्य स्वरूपावबोधकं लक्षणं संक्षेपेण निर्दिश्यते। तत्र प्रथमं गणितस्कन्धस्य लक्षणं भास्कराचार्यकृते सिद्धान्तशिरोमणौ मध्यमाधिकारे—

त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमा-
च्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः॥

( श्लो० ६ )

संहितास्कन्धस्य लक्षणं बृहत्संहितायां प्रथमाध्याये ६ श्लोके—

ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्योंपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता।

अग्रे द्वितीयाध्याये "यत्रैते संहितापदार्थाः" इति १७ सूत्राग्रे १८ सूत्रे "दिनकरादीनां ग्रहाणां चाराः" इत्यादिना विस्तरत उक्तं तत्रैवावलोक्यम्।

स्कन्धत्रये सर्वापेक्षया विस्तृतो जातकस्कन्धः। तत्संक्षिप्तं प्रयोजनं सारावलीग्रन्थारम्भे श्रीकल्याणवर्मणोक्तम्—

यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम्।
व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव॥

वस्तुतो होरास्कन्धो जातकं प्रश्नो मुहूर्तो निमित्तमिति चतुर्भिरङ्गैरुपबृंहितोऽस्ति। अस्य विस्तृतवर्णनं बृहत्संहिताया द्वितीयाध्यायस्थ १४ सूत्रे द्रष्टव्यम्।

स्वरूपावलोकनात् स्पष्टं यत् सर्वेषां स्कन्धानां संहितास्कन्धेऽन्तर्भावः। अत एव श्रीवराहमिहिराचार्येण संहितास्कन्धलक्षणनिरूपणे च "तत्कात्स्न्योंप नयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता" इत्युक्तम्। तथा बृहत्संहिताद्वितीयाध्यस्य १६ सूत्रे "संहितापारगश्च दैवचिन्तको

भवति" इत्यपि तस्य पोषकमेव। तस्मादाचार्यमते संहितास्कन्धः सर्वापेक्षया महान्। अत एवानेनाचार्येण स्वकृतिष्वियमन्तिमा कृती रचितेति।

वक्रानुवक्रास्तमयोदयाद्यास्ताराग्रहाणां करणे मयोक्ताः।
होरागतं विस्तरतश्च जन्मयात्राविवाहैः सह पूर्वमुक्तम्॥

(बृ० सं० १ अ० १० श्लो०)

इत्यनेन प्रतीयते। अतोऽस्य स्कन्धस्य महद्वैशिष्ट्यम्।

अस्य चैवंविधस्य ज्योतिर्निबन्धस्य निबन्धा श्रीवराहमिहिराचार्यः। अस्य जन्मादिविषये स्वकृतबृहज्जातकस्य २६ अध्यायारम्भे—

आदित्यदासतनयस्तदवाप्तबोधः
कापित्थके सवितृलब्धवरप्रसादः।
आवन्तिको मुनिमतान्यवलोक्य सम्यग्
होरां वराहमिहिरो रुचिरां चकार॥ १॥

इत्ययं श्लोकः। तत्र "कापित्थके" इत्यत्र भिन्न-भिन्नपुस्तकेषु भिन्नो भिन्नः पाठः समुपलभ्यते।

के० साम्बशिवशास्त्रिसम्पादिते होराशास्त्रे "कापिष्ठिलः" इति पाठः। अस्य श्रीरुद्रकृतम् "कापिष्ठिलः कपिष्ठिलगोत्रजात इत्यनेनाभिजन्म सूचितम्" इति व्याख्यानं वर्तते। रुद्रकृतव्याख्यानस्य चतुश्शताब्द्याः प्राचीनत्वं श्री-के० साम्बशिवशास्त्रिणा स्वकृतहोराशास्त्रावतारिकायां साधितमस्ति।

मोहमय्यां खेमराजश्रीकृष्णदासमुद्रणालये मुद्रिते भट्टोत्पलकृतव्याख्यासहिते बृहज्जातके "कापित्थके" इति पाठो वर्तते। अस्य भट्टोत्पलकृतं व्याख्यानं यथा—

"कापित्थाख्ये ग्रामे योऽसौ भगवान् सविता सूर्यस्तस्माल्लब्धः प्राप्तो वरः प्रसादो येन।"

गणकतरङ्गिण्यां श्रीसुधाकरद्विवेदिभिः "काम्पिल्लके" इति पाठः संगृहीतः। एवञ्चास्य विवरणे "कालपीनगरे" इत्यर्थः स्वीकृतः।

शङ्करबालकृष्णकृते भारतीयज्यौतिषेऽपि "कापित्थके" इति पाठः संदृश्यते। अस्य मते कापित्थको ग्रामविशेष आसीत्।

प्राचीन-ग्रीक-भौगोलिक-एरियान इत्यनेन "क्याम्बिस्थली" इति शब्दप्रयोगमङ्गीकृत्य तत्स्थानं च पञ्जाबप्रान्तान्तर्गतकुरुक्षेत्रस्य मध्यगतमस्तीति निश्चितम्। वर्तमानकाले तस्य नाम "कइथल" इति वर्तते।

कपिष्ठिलस्येदं कापिष्ठिलम्, वा कपिष्ठलस्येदं कापिष्ठलमिति गोत्रपरकः शब्दः ।

( स्कान्दे नागरखण्डे १०८।२२ )

इत्येवं कापित्थके, काम्पिल्लके, कापिष्ठिल इति विभिन्नपाठाः समुपलभ्यन्ते । तत्र कापित्थके, काम्पिल्लके इति पाठाभ्यां स्थानविशेषस्य संकेतः । इदं स्थानं कुत्र इति केनापि टीकाकारेण न स्पष्टीकृतम् । यत्तु "प्राचीन-ग्रीक-भौगोलिक-एरियान" इत्येन यस्य स्थानस्य संकेतः कृतः स त्वरुचिकरः । वराहमिहिरस्य तत्र गत्वा सूर्योपासना असंभाविनी । यतो हि तस्मिन् ग्रामे अञ्जनामन्दिरं प्रसिद्धमस्ति, न तु सूर्यमन्दिरम् । एवं केवलं सूर्योपासनार्थमेव तत्र गमनं न महत्त्वमावहति, विशिष्टतीर्थस्थानाभावात् । यद्युक्तशब्देन स्थानमेवाभीष्टं तदा तत्स्थानमुज्जयिनीसमीप एव भवितुमर्हति । एवञ्चोक्तशब्दो गोत्रपरको गृह्यते ? तदा विवाद एव नास्ति । प्राचीनकाले स्वपरिचयप्रदानावसरे द्विजाः स्वगोत्रोच्चारपूर्वकं नाम गृह्णन्ति स्म । अतो वराहमिहिराचार्योक्तश्लोके कापिष्ठिल इति पाठो गोत्रपरिचायकः साधु प्रतिभाति । स्कन्धपुराणे नागरखण्डे १०८।२२ अस्य गोत्रस्य प्रसङ्गः समायाति । अतो मद्दृष्ट्या कापिष्ठिल इति गोत्रबोधकः पूर्वटीकाकारस्वीकृतः पाठः समुचितः ।

## जन्मस्थानम्

आचार्येण स्वजन्मस्थानविषये किमपि नोक्तम् । बृहज्जातकोपसंहाराध्यायस्थे "आदित्यदासतनय" इत्यादिश्लोके 'आवन्तिक' इति विशेषणं वर्तते । तेन बहवो विद्वांसोऽस्य जन्मभूमिः 'उज्जयिनी' इति वदन्ति । परम् 'आवन्तिक' विशेषणस्य तत्र जातस्तथा च सोऽस्य देश इति व्युत्पत्त्या उज्जयिन्युद्भव इत्येवार्थं कर्तुं न शक्यते । अतोऽस्य जन्मस्थानविषये विवाद एव वर्तते । भट्टोत्पलेन बृहत्संहिताया आरम्भश्लोकावतरणिकायाम् "तदयमप्यावन्तिकाचार्यमगधद्विजवराहमिहिरोऽर्कलब्धवरप्रसादो" इत्युक्तम् । एतदन्यच्च दृष्ट्वा म० म० श्रीसुधाकरद्विवेदेन गणकतरङ्गिण्यां वराहमिहिरवृत्तालोचने जन्मभूमिविषयेऽनेकमतान्युपन्यस्तानि । मम मते तु 'आवन्तिकः' इति विशेषणोपादानादनेनोज्जयिन्यस्य जन्मभूमिरासीत् । यथाऽऽर्यभटोक्ते—

ब्रह्मकुशशिबुधभृगुरविकुजगुरुकोणभगणान् नमस्कृत्य ।
आर्यभट्टस्त्विह निगदति कुसुमपुरेऽभ्यर्चितं ज्ञानम् ॥

इत्यस्मिन् पद्ये 'कुसुमपुरे' इति शब्दप्रयोगेणार्यभटस्य जन्मभूरपि कुसुमपुरमेव विद्वद्भिः स्वीकृतम् । तथैव वराहमिहिरस्यापि जन्मभूरुज्जयिनी भवेत् । केवलमत्र भट्टोत्पलकृतमगधशब्दप्रयोगो भ्रान्तिमुत्पादयति । वराहमिहिरात् पादोनपञ्चशतकासन्नकालादनन्तरं जातस्य

भट्टोत्पलस्याप्याचार्यजन्मविषये कदाचिदज्ञानं भवेत्। आचार्यस्य पूर्वजा मगधदेशादागत्य उज्जयिन्यां कृतनिवासा भवेयुः, येन भट्टोत्पलेन मगधद्विज इति विशेषणं प्रयुक्तम्। परमाचार्यस्य मगधद्विजत्वेऽभिमानो नासीत्। तेनास्य मगधद्विजत्वं विवादास्पदमेव।

## जन्मकालः

जन्मकालनिर्णयेऽपि विदुषां विवाद एव। यतो हि पञ्चसिद्धान्तिकायां गणितारम्भार्थं ४२७ शको गृहीतः। तद्वाक्यं यथा—

सप्ताश्विवेदसंङ्ख्यं शककालमपास्य चैत्रशुक्लादौ।
अर्धास्तमिते भानौ यवनपुरे सौम्यदिवसाद्ये॥

( प० सि० १ अ० ८ श्लो० )

एवञ्चास्य मृत्युविषये प्रचलितमामराजोक्तम "नवाधिकपञ्चशतसङ्ख्यशाके वराहमिहिराचार्यो दिवं गतः" इतीदं वाक्यम्। पुनश्च पञ्चसिद्धान्तिकायामार्यभटोल्लेखादार्यभटादनन्तरं ५०६ शकात् प्रागेवास्य जन्मादिकालः। तदर्थं विशेषविवेचनं भारतीयज्यौतिष-गणकतरङ्गिण्यादि-ग्रन्थेष्ववलोक्यम्। इतिहासकारैः ४१२ शकासन्नकालोऽस्य निर्धारितः। स युक्तियुक्तः प्रतिभाति।

## जनको गुरुश्च

अस्य जनक आदित्यदासः। स एव गुरुरप्यासीदित्याचार्योक्तपरिचयश्लोकेन स्पष्टम्। पितुरन्योऽपि गुरुरासीदिति—

दिनकरवशिष्ठपूर्वान् विविधमुनीन् भावतः प्रणम्यादौ।
जनकं गुरुञ्च शास्त्रे येनास्मिन् नः कृतो बोधः॥

( प० सि० १ अ० १ आर्या० )

अनेन पद्येन प्रतीयते।

## ग्रन्थाः

१. पञ्चसिद्धान्तिका, २. बृहज्जातकः, ३. लघुजातकः, ४. योगयात्रा, ५. विवाहपटलः, ६. बृहत्संहिता, ७. समाससंहिता, ८. जातकार्णवः, ९. विवाहखण्डः, १०. ढिकनिकयात्रा, ११. ग्रहणमण्डलफलम्, १२. पञ्चपक्षी, १३. ढिक्किनीयात्रा। श्रीशङ्करबालकृष्णदीक्षितेन 'भारतीयज्यौतिषे' वराहस्य "पञ्चसिद्धान्तिका" एव करणग्रन्थ इति यन्मतमुपन्यस्तम्, तज्जातकार्णवदर्शनेनापास्तं भवति। वराहस्य पञ्चसिद्धान्तिकातिरिक्तः करणग्रन्थो जातकार्णवो नेपालदेशीयकाठमाण्डूस्थवीरपुस्तकालये वर्तते।

रुद्रकृतविवरणोपेतं होराशास्त्रमेव बृहज्जातकम्। अस्य प्रचारो विशेषतया वर्तते। फलवेत्तार एनं सादरं स्वीकुर्वन्ति। बृहज्जातकस्य लघुस्वरूपं लघुजातकम्।

यात्राविचारप्रमुखो योगयात्राग्रन्थो मुद्रितो लभ्यते। राज्ञां यात्राविषये विस्तरतो विचारोऽस्मिन् ग्रन्थे वर्तते।

विवाहपटलो वराहप्रणीतः प्रसिद्धः। यथा नाम तथा वस्तुनिर्देशोऽस्मिन् पुस्तके वर्तते। परमेतन्नामको ग्रन्थोऽपराचार्येण पीताम्बरेण प्रणीत इति वाराणसेयसंस्कृतविश्वविद्यालयीय-सरस्वतीभवनपुस्तकालये वर्तत इति तद्धस्तलिखितपुस्तकानां सूचीदर्शनेन प्रतीयते। विवाह-खण्डेति वराहप्रणीतं पुस्तकं नेपालदेशीयकाठमाण्डूनगरे वीरपुस्तकालये वर्तते। परमस्या-रम्भोपक्रमदर्शनेन वराहप्रणीतत्वे संदेहो जायते। पुस्तकारम्भो यथा—

**"ॐ नमः सूर्याय**

विशुद्धनक्षत्रविलग्नमार्याः प्राहुस्तदैवेष्टफलं यतोऽतः।
निगद्यतेऽनेकविधा मयादौ तानद्धशुद्धिः शुभकर्ममुख्या॥

बहुवाचालतां लग्नप्रविष्टां चागमाम्बुधेः।
शिष्यश्रीबालदेवस्य भालदेवमलीलिखेत्॥"

अत्र प्रथमश्लोकानन्तरं यत्पद्यार्धं गद्यं वा तद्विचारणीयं वर्तते। अस्यैव ग्रन्थस्यान्तिमं वाक्यम्—

समावर्तनकर्माणि प्रशस्यन्ते द्विजातिषु।
वृषलग्ने शुभे दृष्टे विप्राणां पदकर्मणि॥

इति बटुकेशविधिः समाप्तः।

१०. ढिकनिकयात्रापुस्तकं नेपालदेशीयकाठमाण्डूनगरे नेपालराष्ट्रियपुस्तकालये वर्तते। मुहूर्तविषयकं पुस्तकमेतत्।

११. पञ्चपक्षी—एतत्पुस्तकमपि नेपाले काठमाण्डूनगरे राष्ट्रियपुस्तकालये तथा वाराणसेय-संस्कृत विश्वविद्यालयीयसरस्वतीभवने वर्तते। परं तत्र मङ्गलाचरणमेतत्—

**"ॐ परमात्मने नमः**

अभिगम्य महादेवं सर्वशास्त्रविशारदम्।
भविष्यदर्थबोधाय पञ्चपक्षी प्रकाश्यते॥
अनेन शास्त्रसारेण लोके कालत्रयं प्रति।
बलाबलानि दृश्यन्ते सर्वकार्येषु निश्चितम्॥

तथा चान्तिमं वाक्यम्—

ग्रन्थास्तावद्विराजन्ते यावन्नोदेति भास्वती ।
पञ्चपक्षिस्तूदिते तु न ग्रन्था न च भास्वती ॥

इति पञ्चपक्षी साकुलं समाप्तम् ।"

अत्राद्यन्तश्लोकदर्शनेन पुस्तकमेतद्वराहमिहिरकृतं नास्तीति प्रतीयते। मङ्गलाचरणे यथा सर्वग्रन्थारम्भे सूर्यवन्दना वर्तते, तथाऽत्र नास्ति । एवञ्चान्तिमं पद्यं यद्यप्यशुद्धम्, तथापि तत्र भास्वतीग्रन्थस्य प्रशंसा वर्तते। भास्वतीकर्ता शतानन्दः १०२१ शके भास्वतीकरणं वराहमिहिरस्वीकृतसूर्यसिद्धान्तसम्मतं व्यलिखत्। तेन पञ्चपक्षिपुस्तकं १०२१ शककालादनन्तरं जातमिति प्रतीयते । पुस्तकमेतद्वराहविषये भ्रान्तिमुत्पादयति । यथा कालिदासा बहवो जातास्तथैव बराहा अपि बहवः संजाता इति वितर्कावसरः समुदेति । यथा प्रसिद्धकालिदासेन विशिष्टं काव्यं रचितम्, तथैव प्रसिद्धेन वराहमिहिरेण प्रसिद्धाः पञ्चसिद्धान्तिकादयो ग्रन्था निबद्धाः। अन्यानि लघुपुस्तकानि केनचिदन्येन वराहेण ग्रथितानीत्यनुमितिर्जायते ।

वाराणसेयसंस्कृतविश्वविद्यालयीयसरस्वतीभवनेऽस्यानेकाः प्रतयः सन्ति । तत्र मङ्गलाचरणं तथाऽन्तिमं पद्यं भिन्नं भिन्नमस्ति । तद्यथा प्रारम्भे—

"नमस्कृत्य महादेवं गुरुं शास्त्रं विशारदम्।
भविष्यदर्थबोधाय वक्ष्येऽहं पञ्चपक्षिणम् ॥

अन्ते—

वाराहमिहिरेणोक्तं सद्यः प्रत्ययकारकम् ।
स्वशंसात्कठिनं भित्वा स्वामासेन स्वशक्तितः ॥

अन्यपुस्तकस्य प्रारम्भे—

नमस्कृत्य हरिं देवं सर्वशास्त्रविशारदम् ।
भविष्यदर्थबोधाय वक्ष्यन्ते पञ्चपक्षिणः ॥

अन्ते—

..................

अन्यत्र च प्रारम्भे—

प्रणम्य श्रीमहादेवं सर्वशास्त्रविशारदम् ।
भविष्यदर्थबोधाय पप्रच्छुर्मुनयो मुदा ॥
तेषां वचनमाकर्ण्य निजगाद महेश्वरः ।

अन्ते—

इति मुनिगणसंतोषार्थं श्रीशिवविरचितं पञ्चपक्षिशकुनं समाप्तम् ।"

इत्येवमेतत्पुस्तकं वराहमिहिराचार्यविषयेऽनेकशः संशयमुत्पादयति । एतदर्थमनुसन्धातारो विचारयन्तु ।

१२. ग्रहणमण्डलफलम् । एकपत्रात्मकं लघुपुस्तकं वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवने वर्तते ।

तत्र प्रारम्भे—

"भूकम्पश्चाति निर्घातोल्कापातो भवेद्यदि ।
ग्रहणं चन्द्रसूर्यस्य धूमकेतोश्च दर्शनम् ।।

अन्ते—

आग्नेयं चाष्टभिर्मासैर्वायव्यं च त्रिमासिकम् ।
वारुणं मासमेकेन माहेन्द्रं सप्तमासिकम् ।।

इति वाराहमिहिरकृते ग्रहणमण्डलफलम् ।"

अस्य भाषादृष्ट्या पुस्तकमेतदाचार्यप्रणीतमस्ति न वेति संशयो जायते ।

१३. दिक्किनीयात्रा—इदं पुस्तकं नेपाले वीरपुस्तकालये वर्तते । तत्राद्यन्तस्थलानि अशुद्धानि सन्ति । यात्राविषयको ग्रन्थः । ढिकनिकयात्रापुस्तकतो भिन्नं पुस्तकमेतत् ।

बृहत्संहिता समाससंहितेति संहिताद्वयस्योल्लेख इतिहासविद्भिः कृतो दृश्यते । परं समाससंहिता मुद्रिताऽमुद्रिता वा न दृष्टिपथं समायाता । इतिवृत्तविदां मतं यत्समाससंहिता बृहज्जातकस्य लघुजातकमिव बृहत्संहिताया लघुस्वरूपं भवेदिति । बृहत्संहिता अनेकस्थलात् मुद्रितोपलभ्यते । तद्यथा—

१. श्रीभट्टकर्ण ( डॉ. कर्ण ) परिशोधिता तत्कृताङ्गलानुवादसहिता च कलिकातानगरे प्रकाशिता ।

२. म० म० श्रीसुधाकरद्विवेदद्वारा संपादिता भट्टोत्पलकृतविवृतिसहिता काश्यां प्रकाशिता ।

३. मोहमयीस्थ( बॉम्बे )खेमराजश्रीकृष्णदासमुद्रणालयतो हिन्दीभाषासहिता प्रकाशिता वर्तते ।

४. वी० सुब्रह्मण्यशास्त्रिकृताङ्गलभाषानुवादसहिता बेङ्गलोरनगरतः प्रकाशिता ।

५. रत्नागिरेर्जगन्मित्रमुद्रणालये मराठीभाषानुवादालङ्कृतमूलपाठयुक्ता मुद्रिता आसीदिति 'भारतीयज्यौतिष' ग्रन्थाद् ज्ञायते ।

६. अस्या अन्तिमं संस्करणं काशिकचौखम्भासिरीजमुद्रणालयात् हिन्दीभाषानुवाद-सहितमधुनोपलभ्यते ।

इत्येवं बृहत्संहिताया भट्टोत्पलेन या टीका कृता तदतिरिक्ता अन्या काचित्प्राचीना टीका नोपलभ्यते ।

महत्सौभाग्यस्यावसरो यद्भट्टोत्पल्लटीकासमलङ्कृताया बृहत्संहिताया वाराणसेयसंस्कृत-विश्वविद्यालयतः पुनः प्रकाशनं जायमानं वर्तते ।

## बृहत्संहिता

अयं ग्रन्थः १०६ अध्यायात्मको वर्तते । इयं संख्या श्रीसुधाकरद्विवेदसम्पादिते ग्रन्थे । कस्मिंश्चित्पुस्तके १०७ अध्यायाः सन्ति । तत्र वी० सुब्रह्मण्यशास्त्रिणां मत आचार्य-प्रणीताः १०० अध्याया एव सन्ति । अन्ये सप्त अध्यायाः प्रक्षिप्ताः सन्ति ।

एषां मते (१) वातचक्रम् , (२) रजोलक्षणम् (३) अङ्गविद्या, (४) पिटकाध्यायः, (५) विवाहपटलः, (६) नक्षत्रजातकम् (७) शास्त्रानुक्रमणी इत्येतेऽध्याया आचार्यप्रणीता न सन्ति । परमेषामाचार्यप्रणयनाभावे किमपि सबलं कारणं नो दर्शितम् ।

## प्रभावः

वराहमिहिराचार्यकाले संहितापदार्था विशेषतो लोके प्रचलिता आसन् । आचार्येण स्वयं बृहत्संहितायाः प्रथमाध्यायस्य द्वितीयश्लोके—

प्रथममुनिकथितमवितथमवलोक्य ग्रन्थविस्तरस्यार्थम् ।
नाति लघु विपुलं रचनाभिरुद्यतः स्पष्टमभिधातुम् ॥

इत्युक्तम् । अत इयं बृहत्संहिता पूर्वप्रचलितविषयानेव सारल्येन संक्षेपेण च प्रकट-यति । अस्याः प्राक्काले गर्गसंहिता, काश्यपसंहिता, नारदसंहितेत्यादिसंहिता आर्षा आसन् । यासां मध्ये बह्वीनां संहितानां तत्र तत्र प्रमाणान्युत्पलेन संगृहीतानि । एवमाचार्येण तत्त-त्संहिताकारमुनेरुल्लेखो मूले कृतो दृश्यते । प्राचीना गर्गसंहिता-मनुसंहिताद्याः १८ संहिता आसन् । अतोऽस्याः संहितायाः प्रणयने प्राक्तनीनां संहितानां प्रभावोऽत्रावलोक्यते ।

एकमपरमपि पुस्तकं दृष्टिपथं समागतं शार्दूलकर्णावदानमिति । एतद्भगवतो बुद्धस्य मातङ्गदारिकां प्रत्युपदेशसूत्ररूपमस्ति । अस्य पुस्तकस्य चीनीतिब्बत्यादिभाषास्वप्यनुवादः सञ्जातः । चीनीभाषायामनुवाद ई०सन् १७० समये जात इति सुजितकुमारमुखोपाध्यायसम्पादित शार्दूलकर्णावदानस्य भूमिकादर्शनेन प्रतीयते । अत एतत्पुस्तकं बृहत्संहितारचनातः पूर्वरचना वर्तते । अस्मिन् भूकम्पनिर्देशः, तिलकाध्यायः, नक्षत्रजन्मगुणः, उत्पातचक्रनिर्देशः, पिटकाध्यायः,

स्वप्नाध्यायः, मासपरीक्षा, खञ्जरीटकज्ञानम्, शिवारुतम्, पाणिलेखा, वायसरुतम्, द्वारलक्षणम्, वस्त्राध्यायः, लुङ्गाध्यायः, धूमिकाध्यायः, इत्यादयो संहितापदार्था अन्ये च विभिन्नविषयाः समुपवर्णिता अवलोक्यन्ते।

काश्यपसंहितायां तु बृहत्संहितायां वर्णिताः प्रायः सर्वे विषयाः सन्निवेशिताः सन्ति। इत्येवं बृहत्संहितायां संहितापदार्थानां विकसितस्वरूपं कालक्रमागतमिति स्पष्टमेव। तत्र आचार्यस्य प्रागल्भ्याल्लेखनशैलीप्रौढ्या च सिद्धान्तेषु भास्कराचार्यस्येव, एवञ्च करणग्रन्थकारेषु गणेशदैवज्ञस्येव प्रतिभावैशिष्ट्याल्लोके यशः प्रसृतम्।

आचार्यस्य कालिदासकाव्येन वा कालिदासकविना सह विशिष्टसम्बन्ध आसीदिति वी० सुब्रह्मण्यशास्त्रिणा बृहत्संहितायाः स्वकृताङ्ग्लानुवादभूमिकायामङ्गीकृतम्। एतदर्थं कालिदासप्रयुक्तसूक्तीनामुल्लेख आचार्येण बृहत्संहितायां विहित इति काश्चिदुक्तय उद्ध्रियन्ते—

यत्राकृतिस्तत्र गुणा वसन्ति ( अ० ७०-२३ )।

प्रायः शरीराकारानुवर्तिनो हि गुणा दोषाश्च भवन्ति ( अ० २–२ )।

ते दुर्जना मे मनसो वितर्काः ( अ० ७३-५ )।

यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ( अ० ७४–३ )।

इत्यादयः प्रसङ्गाः सन्ति। अतो बहूनामिदं मतं यत्कालिदासवराहमिहिरौ समकालिकौ स्तः। तदर्थम् :—

धन्वतरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटखर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य॥

इति ज्योतिर्विदाभरणोक्तं पद्यमपि कौतुकमुत्पादयति। भवतु नामैतत्। पद्यानां लालित्यदृष्ट्या आचार्यस्य पद्यबन्धः कालिदासं स्मारयत्येव।

विषयोपन्यासो वैदग्ध्यपूर्णः क्रमिकश्च। भाषा च सरला प्रासादिकी च। संहितालक्षणानुसारं सर्वे संहिताविषया अत्र साकल्येनावलोक्यन्ते। अर्थाद्ये लक्षणगुणास्ते सर्वेऽत्र संकलिताः सन्ति। अतोऽस्या लोके महानादरः परिलक्ष्यते।

अत्र संहितायां केचनाध्याया अन्यप्राचीनग्रन्थेभ्यः संगृहीता इति केषाञ्चिद्विदुषां मतम्। यथा दकार्गलाध्यायो मनुसंहितातः संगृहीतः।

एवञ्चात्र संहितायां ये सैद्धान्तिका विषया निबद्धास्ते स्वयं परीक्षिता न सन्तीति प्रतीयते। यथा "आसन्मघासु मुनयः" इत्यादिपद्ये सप्तर्षीणामाकाशे स्थितिर्वर्णिता। तस्याः

स्थितेः स्वग्रन्थरचनाकाले स्वयं परीक्षणं कृतञ्चेत्तदा साधूपकृतं भवेत् । यतो हि सप्तर्षीणां गति-विषये स्थितिविषये चाधुना गणितेन पूर्ववर्णितस्थितौ संदेहो जायते । एवमेवागस्त्यचारोऽपि परम्पराविधिनैव वर्णितः । अतोऽयमाचार्यो गणितादिविषयान् क्रियारूपेण न परीक्षितवानिति तत्तत्स्थलनिरीक्षणेन प्रतीयते । आचार्यस्य बृहत्संहितानन्तरं तादृशसंहिताग्रन्थो न प्रादुर्भूतः । श्रीबल्लालसेनविरचितोऽद्भुतसागरस्तथारूपः, तथापि सा प्रतिष्ठा तस्य नास्ति ।

एतत्तु सत्यमेव यज्जातकशास्त्रस्य परम्पराप्रवर्तकोऽयमेव प्रथम आचार्यः । आर्षग्रन्था लभ्यन्ते । परमाचार्यप्रणीता जातकग्रन्थास्तु वराहमिहिरस्य प्राथम्यं लभन्ते । तदनन्तर-मस्या शाखाया विस्तारः समजनि । एतदपि वक्तुमुचितं यद् वराहमिहिरादन्यः कोऽप्याचार्य-स्त्रिस्कन्धज्योतिर्विद्याकुशलो ग्रन्थप्रणेता नासीत् । अतोऽस्य ज्यौतिषशास्त्रस्य आचार्येषु प्रामुख्यमस्ति ।

बृहत्संहिताया हस्तलिखिताः प्रतयो देशस्य सर्वसंस्कृतशास्त्रीयपुस्तकालयेषु वर्तन्ते इत्येतदस्या वैशिष्ट्यं लोकप्रियत्वञ्च द्योतयति । एका प्रतिर्नेपाले काठमाण्डूनगरे वीरपुस्तकालये वर्तते । तस्या लिपिकालविषये "संवत् ६५८ श्रावणशुक्लषष्ठ्यां तिथौ स्वातीनक्षत्रे बृहस्पति-वासरे लिखितं सम्पूर्णम् । श्रीभक्तपत्तने श्रीश्रीजयप्राणमल्लदेवस्य स्वभुज्यराज्ये लिखितमिदं शास्त्रं वराहसंहिता दैवज्ञजयकीर्त्तराजेन स्वार्थमिति शुभमस्तु ।" इयं शब्दावलिराश्चर्यमुत्पाद-यति । संवत् ६५८ काले नेपालेऽस्याः प्रतिलिपिः संजाता । तदाऽस्या अस्माद्देशात्तद्देशे प्रचारार्थं कालोऽपेक्षते । तदर्थं यदि १०० वर्षाणि संरक्ष्यन्ते तदाऽपि पूर्वनिर्दिष्टो जन्मकालः संभावनाकोटिमारोहति ।

अस्याः पुनः प्रकाशनेन ज्योतिर्विद्याजिज्ञासूनां लोकस्य च महानुपकारो भविष्यति ।

वाराणसेयसंस्कृतविश्वविद्यालयः,
वाराणसी
वसन्तपञ्चमी
संवत् २०२४
दि० २२-१-६८

विदुषामाश्रवः
**अवधविहारी त्रिपाठी**
ज्योतिषविभागाध्यक्षः



# PREFACE

* Varâhamihira's admirable production, the Bṛihat Samhitâ, has long been studied and appreciated as a complete system of natural astrology and is still considered as most elaborate and scientific in its treatment.

Dr. Kern's edition of 1864 first introduced it to the Sanskrit scholars of Europe, who have held it in high esteem.

Bhaṭṭotpala's † Vivṛitti is familiar to every student of Varâhamihira as the most elaborate and helpful commentary. But manuscripts of this work are so generally imperfect and incorrect that the task of editing them is by no means easy. ‡

Dr. G. Thibaut, Ph. D., (Principal, Muir Central College, Allahabad, and Superintendent, Sanskrit Studies, N. W. P. and Oudh,) collected six manuscripts of this commentary.

---

* See for his life, "Lives of Hindu Astronomers" compiled by me, p. II.

† See "Lives of Hindu Astronomers," p. 21.

‡ "The commentary on the Bṛihat Samhitâ would be well worthy of being separately edited; unhappily, it is rather bulky, containing the substance of somewhat more than twenty thousand Ślokas, and a still greater barrier to such an undertaking is offered by the horrible state of all codices." ( Preface to the Bṛihat Samhitâ, edited by Dr. H. Kern, p. 62 ).

"I am sorry to say that the copies of Utpala's commentary are in such a condition that I have often been obliged to recur to conjectures, most of them, however, being obvious. The uncertainty about the true reading materially affects the translation; and the want of any explanation on the part of Utpala does so in a no less degree. At the same time, I am of opinion, the greater or less degree of correctness of the extracts by no means renders them less important for the purpose of comparing them with the complete works ascribed to the renowned Indian Mathematicians and Astronomers."

( On some fragments of Âryabhata, by Dr. H. Kern printed in the Journal of the Royal Asiatic Society, p. 4 ).

The first—copied from Râkhan Lal's MS. from Muttra, purchased by P. Dhunḍhirâja Śâstri, late Librarian, Sanskrit College, Benares. The second—a fragment up to Utpâta-Lakshana, bought by Dr. G. Thibaut through me. The third—purchased by me for the Sanskrit College Library. The fourth—belonging to Pt. Vâmanâchârya of Benares, borrowed by me for Dr. G. Thibaut. The fifth—purchased by Dr. G. Thibaut for the Sanskrit College Library in Allahabad. The sixth—an incomplete and useless copy supplied by Pt. Vindhyesvarî Prasâda Dvivedi, Librarian, Sanskrit College, Benares.

All these copies were found to be full of mistakes, and Dr. G. Thibaut asked me to make out the correct original reading by comparing them all with one another.

I accordingly availed myself of another copy belonging to Kṛishna Joshi, one of my pupils and diligently applied myself to the work, the first fifty-one chapters of which are now laid before the pudlic.

I have taken care to add important differences in reading as foot notes; and although emending to the best of my powers I am still doubtful as to the prose quotations from Parâśara, where the names of countries &c. occur ; therefore suggestions in regard to these will be thankfully accepted. Out of the 7 MSS. I have made use of the first five and the seventh are denoted by "प्र" "अ" "क" "ग" "घ" and "व" respectively ; and the 6th being too replete with errors, no notice has been taken of it.

Further I have added an index to help the readers to refer the quotations from different authors.

Other particulars regarding the present edition will be given in an appendix at the end of the work.

In conclusion, I shall consider my labour amply rewarded if this edition is deemed acceptable to the public to whom I venture to present it.

SUDHĀKARA DVIVEDĪ.

श्रीजानकीवल्लभो विजयते

# भूमिका

जयति सहितशेषोऽशेषलीलाविशेषो
जनकवचनधीरः सत्यसङ्कल्पवीरः ।
सकलनिजजनानां शर्मदः सज्जनानां
दशरथनृपबालः कोशलेन्द्रो नृपालः ॥

अस्तीयं भारतवर्षे त्रिस्कन्धज्योतिर्विद्यावेदिनां मध्ये गुरुपरम्परातः प्रथिता सद्गणकगण-प्रशंसिता सकलसंहितालक्षणोपेता विविधविधानभूषिता प्रशस्तपुरुषादिलक्षणमण्डिता [1]वराह-मिहिरकृता बृहत्संहिता नाम । यूरपदेशेऽपीयं डाक्टरकर्ण (Dr. H. Kern) मुद्रणकालात (सन् १८६४ ई०) विशेषतो यूरपदेशीयसंस्कृतविद्याविनोदिनां विदुषां प्रसिद्धा जाता । अथैतस्याः संहितायाः प्राचीनाचार्यवचननिचयनिचिता चतुरविद्वज्जनमनोविनोददायिनी सदर्थ-विचारचातुरीप्रपञ्चसहायिनी सद्भारते भारते चिरात् प्रसिद्धा [2]भट्टोत्पलविरचिता संहिताविवृति-नाम्नी टीका च । चिरकालाल्लेखकाध्यापकाध्येतृदोषैरतीव दुर्दशामापन्ना सम्प्रति सेयं विवृति-र्नष्टभ्रष्टास्पष्टकष्टदायिभिर्दुष्टविवर्णपाठपरम्परासमुदायैः ।

अथैतस्याष्टीकायाः श्रीडाक्टरथिबो( Dr. G. Thibaut, Ph. D., Principal, Muir Central College, Allahabad. )महाशयैः काशिकराजकीयप्रधान-संस्कृतपाठशालासरस्वतीभवने स्थापनार्थं श्रीढुण्ढिराजशास्त्रिद्वारा सम्पादितं मथुरानगरीय-श्रीराखनलालपुस्तकस्य प्रत्यन्तरमेकं मत्साहाय्येन निजार्थं क्रीतमुत्पातलक्षणाध्यायस्य ५७ श्लोक-पर्यन्तं द्वितीयं विद्यामन्दिरे स्थापनार्थं मत्क्रीतं तृतीयं मदुद्योगेनानीतं श्रीमत्पण्डितवरवामना-चार्यस्य पुस्तकं चतुर्थं तत्रैव पुस्तकालये स्थापनार्थं प्रयागे क्रीतं पञ्चमं सम्प्रति पुस्तकालयाध्यक्ष-श्रीपण्डितविन्ध्येश्वरीप्रसादद्विवेदिना दत्तं खण्डितमनुपयुक्तं षष्ठं च पुस्तकं सङ्गृह्यैतेषु सर्वेषूप-लब्धपुस्तकेषु च प्रतिपङ्क्त्यशुद्धसमुदायं संवीक्ष्य तच्छोधनं च दुरवगममवगम्य संशोधनार्थं मह्यं तानि समर्पितानि । मयाऽस्मच्छात्रश्रीकृष्णजोशीतो लब्धं खण्डितं पञ्चाशदध्यायपर्यन्तमपरं

---

१. वराहमिहिरविषये द्रष्टव्या मद्विरचिता गणकतरङ्गिणी, पृ० ११ ।

२. भट्टोत्पलविषये द्रष्टव्या मन्निर्मिता गणकतरङ्गिणी, पृ० २१ ।

सप्तमं पुस्तकं च समासाद्य बहुनाऽऽयासेन तेभ्यो विवर्णान् स्खलितान् पाठान् संशोध्य पाठशालाध्यक्षश्रीवेनिस् ( A. Venis, M. A., Principal, Sanskrit College, Benares. ) महाशयानुकम्पया विजयनगरसंस्कृतसीरिजनाम्नि प्रबन्धे मुद्रापितुमारब्धेयं विवृतिर्यस्याश्चायमाद्यत एकपञ्चाशदध्यायात्मकः पूर्वभागोऽद्य प्रकाश्यते। एतस्या एकस्यैवाध्यायस्य संशोधने यावान् परिश्रमस्तद्दशमांशेनैव श्रमेण सुखेन मया समग्रबृहत्संहिताया नूत्ना सुटीका कर्त्तुं शक्यते—इति सर्वं सदसद्विवेकिनां सहृदयानां विदुषामग्रे ह्युपलब्धप्राचीनपुस्तकस्थदुष्टभ्रष्टपाठानां तथा मच्छोधितपाठानां चावलोकनेन स्फुटमेवेत्यात्मप्रशंसाप्रयासेनालमिति। अत्र बहूपयुक्तानि प्राचीनानां बहूनि वचनानि प्राचीनमतसूचकानि सन्ति, येषु यावच्छक्यमुपलब्धग्रन्थान्तराद्यवलोकनेन पाठभेदादिनिश्चयश्च टिप्पण्यां प्रदर्शितः। अत्र यद्यपि बहुनायासेन सावधानतया च सर्वाणि पदानि संशोधितानि, तथापि गद्यरूपपराशरवचनेषु यत्र देशादिनामानि सन्ति तत्रास्ति नामान्तरसंशयोऽतो निष्पक्षपातधिया प्राचीनकृतिकीर्त्तिस्थापनशीलैः सुधीभिस्तान्यन्यानि च भृशं विचिन्त्य संशोधनीयानीति तान् सुजनान् विनीतो मुहुरर्थये।

अत्र प्रथमं पुस्तकं 'प्र' संज्ञकम्, द्वितीयम् 'अ' तृतीयं 'क' चतुर्थं 'ग' पञ्चमं 'घ' सप्तमं 'व' संज्ञकं च प्रकल्पितम्। षष्ठं चातीव भ्रष्टमवलोक्य नादृतम्। एतानि सर्वाणि पुस्तकानि प्राय एकमातृकाणि तेन सर्वत्रानुपयुक्तपाठान्तराणि विहाय स्थलविशेषे क्वचिदेव समुचितपाठान्तरं मया न्यासि। एवमत्र यत्र यत्र येषां येषामाचार्याणां ग्रन्थान्तराणां वा वचनानि तेषां सुखेनावगमाय ग्रन्थादौ तत्सूचीपत्रं च निवेशितम्। अन्ये ग्रन्थस्थविशेषा ग्रन्थान्ते प्रकाशिता भविष्यन्ति।

भट्टोत्पलः प्लवमकल्पयदर्थिनां यं
श्रीमद्वराहमिहिरोदिततोयराशौ।
स्वार्थाप्तये विवृतिरूपमपूर्वमज्ञा-
श्चक्रुर्विवर्णमकलं बहुधाऽत्र यं च॥ १॥

तं विप्लवं प्लवमवेक्ष्य विवर्णशीर्णं
ते शिल्पकर्मनिपुणाश्च कलाप्रवीणाः।
तद्भग्नभागपरिसंस्करणाय मह्य-
माज्ञां ददुः सपदि यूरपदेशविज्ञाः॥ २॥

तद्भग्नभागमखिलं परिशोध्य सम्यग्
वर्णं विभूष्य विधिवच्च पवित्रवर्णैः।

सोऽयं स्तवो निजकरेण सुधाकरेण
नूत्नीकृतः सुकृतिभिः सकलो विलोक्यः ॥ ३ ॥

अत्र प्राचीनवाचां खचरसमुचिताचारचारप्रचार-
चञ्चच्चारुप्रपञ्चार्चिततुरगकरिश्वादिलक्ष्माङ्किताताम् ।
सन्दोहे नेत्रदोषादखिलविधिकृतां वर्णसंयोजनाद्वा
बुद्धिभ्रान्त्या खिलत्वं गणकगणवरास्तच्च संशोधयन्तु ॥ ४ ॥

इति मुहुः शिरसा सुरसंहिता-
गणितजातकभेदविदो विदः ।
बहुविधान् नयतोऽर्थयते सुधीः
सदुपकारकरोऽत्र सुधाकरः ॥ ५ ॥

सुधाकरद्विवेदी



# श्रीभट्टोत्पलकृतविवृतिसहितबृहत्संहितायाः पूर्वभागस्थितानामध्यायानामनुक्रमणिका



—:o:—

# आचार्यवचनानां सूचीपत्रम्

## अज्ञातनामाचार्यवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २ | १—६ | ३ |
| २ | १०—११ | १ |
| ९ | ३—६ | २ |
| ९ | ९—१० | १ |
| १८ | २०—२१ | १ |
| १८ | १७—२६ | ५ |
| ४८ | २०—२६ | ३ |
| ४९ | १—१२ | ६ |
| ५० | १—२ | १ |
| ५० | १९—२० | १ |
| ६८ | ३—४ | १ |
| ७२ | १८—१९ | १ |
| ७५ | २३—२६ | २ |
| ७८ | ७—१२ | ३ |
| ७८ | २०—२१ | १ |
| १२५ | १७—२१ | २॥ |
| १२९ | ९—१० | १ |
| १३८ | २५—२६ | १ |
| १८० | १—२८ | १ |
| २०९ | २०—२१ | १ |
| २१३ | १०—१६ | ३ |
| २४१ | ११—२२ | ६ |
| २५४ | १६—१९ | २ |
| २६९ | ७—८ | १ |
| २९१ | १—२ | १ |
| ३०४ | १५—१६ | १ |
| ३०८ | २३—२६ | २ |
| ३५५ | ५—६ | १ |
| ३५९ | ११—१२ | १ |
| ३९४ | २ | ॥ |
| ३९७ | २०—२३ | २ |
| ४५३ | १—१८ | ९ |
| ४६६ | २०—२८ | ४ |
| ४६७ | २—८ | ३॥ |
| ४६९ | ७—१६ | २॥ |
| ५२२ | ८—१४ | ३॥ |
| ५४५ | २३—२४ | १ |

## आर्यभटस्य वचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २४ | ७—१० | २ |
| ४३ | ५—६ | १ |
| ४३ | २०—२३ | २ |
| ४४ | ४—५ | १ |
| ५५ | ४—११ | ४ |
| ५६ | २३—२४ | १ |
| ५७ | ९—१० | १ |
| ९५ | ९—१० | १ |
| १७२ | ३—४ | १ |
| २९२ | ५—६ | १ |

## ऋषिपुत्रवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १३८ | १२—२० | ४ |
| १६८ | ७—१० | २ |
| १७१ | १६—१९ | १ |
| १७४ | १९—१० | २ |
| २०९ | २३—२६ | २ |
| २९१ | ५—६ | १ |
| ३०१ | १—२ | १ |
| ३२९ | ८—१० | १॥ |
| ३४४ | २०—२३ | २ |
| ३४५ | १—२ | १ |
| ४२३ | १७—१८ | १ |

## कणादवचनम्

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ८ | ७ | ॥ |
| ८ | ११ | ॥ |

## कपिलाचार्यवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ७ | ५—२० | } ९ |
| ८ | १—२ | |

## कश्यपवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १३९ | १२—१८ | ३॥ |

## कश्यपवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १४९ | ९—१० | १ |
| १४९ | १८ | ॥ |
| १५० | ३—४ | १ |
| १५० | १२—१३ | १ |
| १५० | २२—२३ | १ |
| १५१ | ४—५ | १ |
| १५१ | १४—१५ | १ |
| १५१ | २४ | ॥ |
| १६१ | २०—२१ | १ |
| १६२ | ६—७ | १ |
| १६२ | १६—१७ | १ |
| १६२ | २५—२६ | १ |
| १६३ | ८—९ | १ |
| १६३ | १८—१९ | १ |
| १६४ | १—२ | १ |
| १६६ | १०—१३ | २ |
| २७६ | २०—२५ | ३ |
| ३१९ | २७—२८ | १ |
| ३३६ | २०—२१ | १ |

## काश्यपवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १२५ | ७—८ | १ |
| १२६ | ७—८ | १ |
| १३० | २—९ | ३॥ |
| १३१ | ७—८ | १ |
| १३२ | ९—१० | १॥ |
| १७१ | १२—१३ | १ |
| १७५ | २—३ | १ |
| १८२ | ३—७ | २॥ |
| १९५ | २२—२७ | ३ |
| १९८ | ५—९ | २॥ |
| २०७ | १९—३० | } १० |
| २०८ | १—८ | |
| २०८ | २१—२२ | १ |
| २७८ | ५—१८ | ७ |
| २७९ | १०—१७ | ४ |

### काश्यपवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २८० | २३—३० | ५ |
| २८१ | १—२ | } ४ |
| २८२ | ९—१६ | |
| २८३ | १८—२६ | ४॥ |
| २८५ | १—१० | ५ |
| २८६ | ५—१४ | ५ |
| २८७ | ६—११ | ३ |
| २८७ | २४—२७ | २ |
| २९२ | २—८ | ३॥ |
| ३१४ | १३—१६ | २ |
| ३१४ | २६—२७ | १ |
| ३१७ | १२—१४ | १॥ |
| ३२५ | १२—१९ | ४ |
| ३३३ | १२—२३ | ६ |
| ३५२ | १४—१५ | १ |
| ३९१ | १२—१९ | ४ |
| ३९४ | ९—१३ | २॥ |
| ३९५ | ३—४ | १ |
| ४०४ | १३—१८ | ३ |
| ४०५ | २१—२३ | १॥ |
| ४०९ | १३—२६ | ७ |
| ४११ | २२—२३ | १ |
| ४१५ | ४—५ | १ |
| ४१६ | ९—१२ | २ |
| ४१६ | २३—२६ | २ |
| ४२१ | ५—१० | ३ |
| ४२३ | १—२ | १ |
| ४२५ | १९—२५ | ३॥ |
| ४२७ | २४—२५ | १ |
| ४२८ | २१—२२ | १ |
| ४३६ | १२—१३ | १ |
| ४३६ | २२—२३ | १ |
| ४३७ | ४—५ | १ |
| ४३७ | १४—१५ | १ |
| ४३७ | २५—२६ | १ |
| ४३८ | ७—८ | १ |
| ४३८ | १५ | ॥ |
| ४३९ | १—५ | २॥ |
| ४३९ | १३—१४ | १ |
| ४३९ | २२—२३ | १ |
| ४४० | २२—२५ | } ३ |
| ४४१ | १—२ | |

### काश्यपवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ४४३ | १९—२० | १ |
| ४४४ | ५—८ | २ |
| ४६५ | २३—२४ | १ |
| ४६६ | ४—५ | १ |
| ४६७ | १५—१६ | १ |
| ४७५ | १—५ | २॥ |
| ४७७ | १०—१२ | १॥ |
| ४७८ | १६—१७ | १ |
| ४८१ | ८—१९ | १ |
| ५३६ | ४—७ | २ |
| ५३८ | २५—२८ | २ |

### गर्गवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ४ | २४—२५ | } ३ |
| ५ | १—४ | |
| १० | २१—२२ | १ |
| १७ | २६—२७ | } २॥ |
| १८ | १—३ | |
| ३९ | १५—१६ | १ |
| ७३ | १०—११ | १ |
| ७३ | १७—१८ | १ |
| ८० | २७—२८ | १ |
| ८८ | २१—२२ | १ |
| ९८ | ४—११ | ४ |
| १११ | २५—२६ | १ |
| ११७ | १०—११ | १ |
| १२० | ७—१२ | ३ |
| १२४ | १६—१७ | १ |
| १२५ | २—५ | २ |
| १३० | २३—२४ | १ |
| १५५ | २२—२७ | ३ |
| १५६ | १२—१५ | २ |
| १५६ | २४—२५ | } २ |
| १५७ | १—२ | |
| १५७ | १२—१५ | २ |
| १६० | २३—२७ | २॥ |
| १६७ | १०—१३ | २ |
| १७१ | २१—२२ | १ |
| १७२ | १५—१८ | २ |
| १७३ | २६—२७ | } ४ |
| १७४ | १—६ | |

### गर्गवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १७४ | २६—२७ | १ |
| १७५ | १३—१४ | १ |
| १७५ | २२—२३ | १ |
| १७५ | २२—२३ | १ |
| १७६ | ९—१० | १ |
| १७६ | १८—१९ | १ |
| १७७ | १—२ | १ |
| १७७ | १०—११ | १ |
| १७७ | १९—२० | १ |
| १७८ | ७—८ | १ |
| १७८ | १६—१७ | १ |
| १७८ | २५—० | } १॥ |
| १७९ | १—२ | |
| १७९ | ९—१० | १ |
| १९७ | ६—१७ | ६ |
| १९८ | २१—२६ | ३ |
| १९९ | १४—१९ | ३ |
| २१० | १७—१८ | १ |
| २१३ | २८—२९ | १ |
| २१४ | ७—९ | ५॥ |
| २१५ | १६—१ | १७ |
| २२० | १६—१७ | १ |
| २२२ | ७—८ | १ |
| २२३ | १२—१५ | २ |
| २२५ | ७—१० | २ |
| २२५ | १८—२१ | २ |
| २२६ | १—१२ | १ |
| २२६ | ११—१३ | १॥ |
| २२६ | २१—२२ | १ |
| २२७ | ४—५ | १ |
| २२७ | २०—२३ | २ |
| २२८ | ४—५ | १ |
| २२८ | १३—१६ | २ |
| २२८ | २४—२७ | २ |
| २२९ | ८—११ | २ |
| २२९ | २०—२२ | १॥ |
| २३० | ८—११ | २ |
| २३० | १९—२२ | २ |
| २३१ | ४—७ | २ |
| २३१ | १५—१८ | २ |
| २३२ | १—४ | २ |
| २३२ | ११—१२ | १ |
| २३५ | २६—२७ | १ |

## गर्गवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २५३ | १८—२१ | २ |
| २५९ | ९१—१६ | ४ |
| २८९ | २२—२७ | ३ |
| २९१ | २६—२७ | १ |
| २९५ | २२—२७ | ३ |
| २९६ | ४—७ | २ |
| ३१९ | २४—२५ | १ |
| ३२१ | ४—१२ | ४॥ |
| ३२२ | ९—१२ | २ |
| ३२७ | ७—१२ | ३ |
| ३२८ | ११—१४ | ३ |
| ३३५ | १४—१५ | १ |
| ३३६ | २८—२९ | १ |
| ३३८ | १८—२० | १॥ |
| ३४१ | १—७ | ३॥ |
| ३४४ | ७—८ | १ |
| ३४४ | ११—१८ | ४ |
| ३४५ | २१—२२ | १ |
| ३४८ | २७—२८ | } २ |
| ३४९ | १—२ | |
| ३४९ | २७—२८ | १ |
| ३५१ | २६—२९ | ३ |
| ३५५ | २३—३१ | ४॥ |
| ३५७ | २२—२९ | } ५॥ |
| ३५८ | १—३ | |
| ३५९ | १९—२० | १ |
| ३६२ | १४—१६ | १॥ |
| ३६३ | ४—५ | १ |
| ३८२ | १०—११ | १ |
| ३८८ | १४—२१ | ४ |
| ३९५ | ८—१४ | ३॥ |
| ३९७ | २७—३० | } ३ |
| ३९८ | १—२ | |
| ३९८ | २४—२९ | ३ |
| ४०० | ५—१० | ३ |
| ४०१ | ९—१४ | ३ |
| ४०२ | ११—१९ | ३ |
| ४०३ | १—४ | २ |
| ४०६ | १—३ | १॥ |
| ४०६ | २०—२१ | १ |
| ४१७ | २७—२८ | १ |
| ४१८ | ११—१४ | २ |

## गर्गवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ४१९ | ४—५ | १ |
| ४१९ | १३—१४ | १ |
| ४२३ | २४—२५ | } ६ |
| ४२४ | १—१० | |
| ४२९ | १२—१३ | १ |
| ४३० | १८—२६ | ४॥ |
| ४४६ | ९—१३ | २॥ |
| ४४९ | १—२ | १ |
| ४५५ | १९—२० | १ |
| ४५६ | ३—४ | १ |
| ४५६ | १०—१३ | २ |
| ४६० | १२—१३ | १ |
| ४६२ | ३—६ | २ |
| ४६३ | २३—२६ | २ |
| ४७९ | १९—२० | १ |
| ४८० | ३—१२ | ५ |
| ४८० | २४—२९ | ३ |
| ४८१ | २४—२५ | १ |
| ४८२ | ५—१२ | ४ |
| ४८५ | २०—२१ | १ |
| ४८६ | ४—५ | १ |
| ४८७ | २६—२७ | १ |
| ४९३ | १९—२८ | ५ |
| ४९४ | २४—३० | ३॥ |
| ४९७ | १९—२३ | २॥ |
| ५०६ | ३—६ | २ |
| ५०६ | १४—१५ | १ |
| ५०६ | २३—२६ | २ |
| ५०७ | २३—२४ | १ |
| ५०८ | १९—२२ | २ |
| ५०९ | १२—१४ | १॥ |
| ५०९ | २१—२२ | १ |
| ५४० | २७—३० | } ३ |
| ५४१ | १—२ | |
| ५४२ | ९—१४ | ३ |
| ५१२ | १४—१५ | १ |
| ५१२ | २८—२९ | १ |
| ५२४ | ९—१२ | २ |
| ५३२ | १२—१८ | ३॥ |
| ५३३ | १७—१८ | १ |

## देवलवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ११२ | १५—१६ | १ |
| १६८ | २५—२६ | } ५ |
| १६९ | १—८ | |
| १९५ | १९—२० | १ |
| २१९ | २३—२४ | १ |
| ३१४ | १—२ | १ |
| ३३६ | २४—२५ | १ |
| ३९२ | १९—२१ | १॥ |

## नन्दिवचने

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १७० | ११—१२ | १ |
| ४२३ | २०—२१ | १ |

## नारदवचनम्

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २२२ | १२—१३ | १ |

## पञ्चसिद्धान्तिकास्थ-वचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २३ | १—२ | १ |
| २९ | २७ | ॥ |
| ३० | १८—२६ | } ५ |
| ३१ | १—२ | |
| ३१ | ९—१० | १ |
| ३१ | २१—२४ | } १२ |
| ३२ | १—२० | |
| ३४ | १८—१९ | १ |
| ३५ | २—३ | १ |
| ३५ | ५—६ | १ |
| ४० | २—३ | १ |
| ४० | ६—७ | १ |
| ४० | ९—१० | १ |
| ४० | १७—१८ | १ |
| ४१ | २—३ | १ |
| ४१ | १३—१६ | २ |
| ४१ | २३—२४ | १ |
| ४२ | २—३ | १ |
| ४२ | ५—६ | १ |
| ४२ | २३—२४ | १ |
| ४३ | १२—१५ | २ |
| ४४ | २६—२७ | } २ |
| ४५ | १—२ | |

## पञ्चसिद्धान्तिकास्थवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ४५ | २५—२६ | १ |
| ५५ | १२—१६ | ४ |
| ५६ | २०—२१ | १ |
| ५६ | २६—२७ | ३ |
| ५७ | १—४ | |
| ५७ | २३—२४ | २५ |
| ५८ | १—३० | |
| ५९ | १—२० | |
| ५९ | २६—२७ | २ |
| ६० | १—२ | |
| ६० | ७ | ॥ |
| ६० | ९—१२ | २ |
| ६० | १५ | ॥ |
| ६० | १८—१९ | १ |
| ६१ | ५—८ | २ |
| ६१ | १३—१४ | १ |
| ६३ | १६—२३ | ४ |
| ६२ | २—५ | २ |
| ६४ | १७—१८ | १ |
| १०२ | १४—२३ | १० |
| १०३ | १—१० | |
| ११६ | ८—९ | १ |
| १२१ | ३—२२ | १० |
| १२१ | २४—२५ | २ |
| १८३ | २५—२६ | ३ |
| १८४ | १—४ | |
| २५४ | ४—७ | २ |
| २६४ | ४—५ | १ |
| ३०२ | १४—१५ | १ |
| ३२० | १८ | ॥ |
| ३४० | ४—५ | १ |
| ३४२ | १८—१९ | १ |

## पराशरवचनानि*

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १४ | १—१६ | ग |
| १४ | २३—२७ | ग |
| १७ | १—२४ | |
| २३ | १२—१९ | ग |

## पराशरवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ७७ | २४—२५ | ग |
| ७८ | १—५ | |
| ७९ | ९—१४ | ग |
| ८१ | २ | १ |
| ८१ | २१—२८ | ४ |
| ८२ | ९—१० | १ |
| ८७ | २३—२५ | ग |
| ९० | १३—२८ | ग |
| ९१ | ८—९ | १ |
| ९२ | ९—१० | १ |
| ९३ | १८—२१ | २ |
| ९३ | २४—२६ | ग |
| ९४ | १—२ | ग |
| ९७ | ६—१३ | ग |
| १०३ | १६—२३ | ग |
| १०६ | ४—५ | ग |
| १०८ | १०—१७ | ग |
| १०९ | २०—२१ | ग |
| १११ | १५—२३ | ग |
| ११९ | ४—१६ | ग |
| १२४ | ६—१४ | ग |
| १३१ | १० | ग |
| १३५ | २३—२४ | ग |
| १३६ | १—१० | |
| १३९ | ३—१७ | ग |
| १४१ | २—५ | ग |
| १४२ | ८—१२ | २॥ |
| १४८ | १२—१९ | ग |
| १५५ | १२—१४ | ग |
| १५६ | २—३ | ग |
| १५६ | १७ | ग |
| १५७ | ४ | ग |
| १५७ | १७ | ग |
| १५८ | १—२ | १ |
| १५८ | ८—९ | १ |
| १५८ | १३—१४ | १ |
| १६० | १६—१७ | ग |
| १६० | १८—१९ | १ |

## पराशरवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १६५ | ५—६ | ग |
| १६५ | २३—२५ | ग |
| १६७ | ४—८ | ग |
| १६९ | २०—२३ | २ |
| १७० | २० | ग |
| १७४ | ८—१५ | ग |
| १८० | १९—२१ | ग |
| १८१ | ९—१० | १ |
| १९६ | २८—२९ | ग |
| १९७ | १—४ | |
| १९९ | २१—२५ | ग |
| २०३ | ३—१५ | ग |
| २०३ | २७—२८ | १ |
| २०८ | १०—१३ | ग |
| २०८ | २९—३४ | ४ |
| २०९ | १—२ | |
| २१३ | ५—८ | ग |
| २१८ | १५—३० | ग |
| २१९ | १—७ | |
| २१९ | १६—१९ | २ |
| २२० | १—२ | ग |
| २२० | १९—२० | १ |
| २२१ | २९ | ग |
| २२२ | १—४ | ग |
| २२९ | २४—२९ | ३ |
| २३३ | ४—८ | ग |
| २३३ | १८—२२ | ग |
| २३४ | ४—८ | ग |
| २३५ | १८—२४ | ग |
| २३६ | ११—१५ | ग |
| २३६ | २३—२६ | ग |
| २३७ | ४—५ | ग |
| २३७ | २१—२७ | ग |
| २३८ | ८—१३ | ग |
| २३८ | २६—२९ | ग |
| २३९ | ८—१० | ग |
| २३९ | २३—२८ | ग |

---

* यद्यपि कुत्रचित् पराशरस्थाने पाराशरस्तथापि सर्वत्र पराशरमेव स्वीकृत्यात्र वचनानि लिखितानि ।

### ब्रह्मगुप्तवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २३ | २१—२४ | २ |
| २७ | ९ | ॥ |
| ३१ | १४—१७ | २ |
| ३२ | २३—२४ | १ |
| ३२ | २६—२७ | १ |
| ३४ | १६ | ॥ |
| ३९ | २—११ | ५ |
| ४२ | ८—९ | १ |
| ४३ | २—३ | १ |
| ४३ | १७—१८ | १ |
| ४५ | ५—६ | १ |
| ४९ | १६ | ॥ |
| ५४ | २—३ | १ |
| ५५ | २४—२५ } | २ |
| ५६ | १—२ } | |
| ५७ | १२—१५ | २ |
| ९४ | १५—१६ | १ |
| ९८ | १७—२३ | ३॥ |
| ११५ | ३—४ | १ |
| ११५ | २०—२१ | १ |
| ११६ | ११—१२ | १ |
| ११६ | २०—२३ | २ |
| ११७ | १३—१७ | २॥ |
| ११८ | १२—२२ | ५॥ |
| २०४ | १४—१५ | १ |
| २०५ | १८—२१ | २ |
| २५५ | ११—१२ | १ |
| ३४० | ७—८ | १ |
| ३५३ | १२—१३ | १ |

### भट्टोत्पलवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ३४ | १२—१३ | १ |
| ६२ | ११—२८ | ४ |
| ६२ | २२—२३ } | २॥ |
| ६३ | १—३ } | |
| १२२ | १४—१८ | २॥ |

### भद्रबाहुवचनम्

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २१० | ८—१५ | ४ |

### भानुभट्टवचनम्

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २०४ | १७—१८ | १ |

### मनुवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २ | २१—२२ | २ |
| ५ | १९—२६ } | ९ |
| ६ | १—१० } | |

### महाभाष्यवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २ | ८—९ | ग |
| ३०४ | ७—८ | १ |
| ३०५ | ५—६ | १ |
| ३०६ | १५—१६ | १ |
| ३०७ | २०—२१ | १ |
| ३०९ | ८—९ | १ |
| ३१० | १३—१४ | १ |
| ३११ | २७—२८ | १ |
| ३१३ | ५—६ | १ |

### योगयात्रास्थवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ४४८ | ६—११ | ३ |
| ४५३ | १—१८ | ९ |
| ४६८ | २७—३० | २ |
| ४६९ | २—५ | २ |
| ५१९ | २७—२८ } | ८ |
| ५२० | १—१४ } | |

### लौकायतिकवचनम्

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ९ | ९—१० | १ |

### वसिष्ठवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ५६ | १३—१४ | १ |
| ११२ | ११—१२ | १ |
| २९३ | १९ | ॥ |
| ३९५ | २१—२४ | २ |
| ४३२ | १—२ | २ |
| ४३२ | १७—१८ | १ |
| ४३३ | २०—२१ | १ |
| ४३४ | ११—१२ | १ |
| ४३४ | २५—२६ | १ |

### विष्णुचन्द्रवचनम्

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ३०३ | ६—७ | १ |

### वीरभद्रवचनम् ।

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ११२ | ७—८ | १ |

### हस्तिवैद्यककारवीरसोमवचनम्

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ३ | १६ | ॥ |

### वृद्धगर्गवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ८७ | १७—२१ | २॥ |
| ८९ | ५—६ | १ |
| ९९ | १५—१८ | २ |
| १०० | २—३ | १ |
| १०० | १२—१७ | ३ |
| १०० | २४—२७ | २ |
| १०१ | ५—७ | १॥ |
| १०१ | १५—१६ | [illegible] |
| १०२ | १—१ | १ |
| १०२ | १०—११ | १ |
| १०५ | ७—८ | १ |
| ११९ | २४—२५ | १ |
| १२० | ३—४ | १ |
| १२७ | १०—१५ | ३ |
| १२८ | ७—१० | २ |
| १३० | १०—११ | १ |
| १५३ | २३—२६ } | ५ |
| १५४ | १—६ } | |
| १५५ | ७—१० | २ |
| १६१ | १७—१८ | १ |
| १६६ | १—८ | ४ |
| १६७ | २३—२८ } | ४ |
| १६८ | १—२ } | |
| १६९ | १५—१८ | २ |
| १७९ | १८—१९ | १ |
| २२३ | १०—२० | २ |
| २३४ | [illegible]—१९ | ५ |
| २५५ | २०—२१ | १ |
| २५७ | ५—८ | २ |
| २५८ | ४—१४ | २ |
| २९१ | ९—१४ | ३ |
| ३०१ | ४—७ | २ |
| ३३० | २५—२७ | १॥ |
| ३९५ | ३०—३१ } | २ |
| ३९६ | १—२ } | |
| ५१४ | ११—२० | ५ |

### पराशरवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २४० | ८—६ | ग |
| २४० | १७—१६ | ग |
| २४१ | ५—६ | ग |
| २४४ | १७—२० | ग |
| २४५ | १—४ | |
| २५४ | १०—१४ | ग |
| २६० | ६—१८ | ग |
| २६१ | ७—१० | ग |
| २६१ | २७—२८ | ग |
| २६२ | १—२ | |
| २६३ | ४—१२ | ग |
| २६३ | २८ | ग |
| २६४ | १—३ | |
| २६४ | १५—१८ | ग |
| २६५ | १—३ | ग |
| २६५ | २७—३० | ग |
| २६६ | १७—१६ | ग |
| २६१ | २३—२४ | ग |
| २६५ | ११ | ग |
| २६५ | १६—२० | ग |
| ३०० | ६—१० | १ |
| ३२४ | १२—१६ | ग |
| ३२७ | १४—१५ | ग |
| ३३० | १३—१६ | २ |
| ३४६ | ४—८ | ग |
| ३५६ | २—४ | ग |
| ३५६ | २७—२६ | ग |
| ३५६ | ४—१० | ग |
| ३६२ | १८—२१ | २ |
| ३६३ | ७—६ | ग |
| ३७७ | ३—६ | २ |
| ३८१ | २५—२६ | १ |
| ३८६ | १५—१८ | २ |
| ३६० | २५—३० | ग |
| ३६१ | १—१० | २ |
| ३६७ | ११—१६ | ग |
| ३६७ | २५—२६ | ग |
| ३६६ | १३—१७ | ग |
| ४०० | १६—२२ | ग |
| ४०१ | २३—२६ | ग |
| ४०२ | २१—२४ | ग |
| ४०४ | २१—३० | ७ |
| ४०५ | १—४ | |
| ४०६ | ५—६ | ग |
| ४२८ | २४—२७ | २ |
| ४२६ | १—२ | १ |
| ४६६ | २५—२६ | १ |
| ५४२ | १७—२३ | ग |
| ५४३ | २८—३० | ग |
| ५४४ | १—३ | ग |
| ५४५ | १६—२२ | |
| ५४६ | १५—१८ | ग |
| ५४८ | १—४ | ग |
| ५४८ | ६—७ | १ |
| ५४६ | १८—१६ | १ |
| ५४६ | ३—४ | ग |
| ५४६ | १५—१६ | ग |
| ५४६ | २७—२८ | ग |
| ५५० | ७—१० | ग |
| ५५० | १२—१५ | २ |
| ५५० | २२—२४ | ग |
| ५५१ | १—३ | १॥ |
| ५५१ | १०—११ | १ |
| ५५१ | २०—२१ | १ |
| ५५२ | ६—१२ | ग |
| ५५२ | २१—२३ | ग |
| ५५३ | १—३ | ग |
| ५५३ | १२—१४ | ग |
| ५५४ | ७—११ | ग |
| ५५४ | २८—२६ | ग |
| ५५५ | १—३ | |
| ५५५ | २१—२४ | ग |
| ५५६ | १५—१८ | ग |
| ५५६ | २६—२८ | ग |
| ५५८ | १७—२५ | ग |
| ५५६ | १७—१६ | ग |
| ५६० | २७—२६ | ग |
| ५६० | १—११ | ग |
| ५६२ | १—८ | ग |
| ५६३ | २०—२४ | ग |
| ५६४ | ६—११ | ग |
| ५६५ | १—३ | ग |
| ५६५ | १६—१८ | ग |
| ५६५ | २५—२६ | ग |
| ५६६ | ५—६ | ग |

### पुराणकारवचने

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| १११ | ४—५ | १ |
| ३४२ | ६—१० | १ |

### पुलिशाचार्यवचनानि

| पृ. सं. | पं.. सं. | श्लो. |
|---|---|---|
| २२ | ४—५ | १ |
| २४ | २—५ | २ |
| २४ | २५—२६ | १ |
| २५ | ५ | ॥ |
| २५ | ७ | ॥ |
| २५ | १५ | ॥ |
| २५ | १८ | ॥ |
| २६ | २१ | ॥ |
| २६ | १२—१५ | २ |
| २७ | ५—६ | १ |
| २८ | २ | ॥ |
| ३६ | ३—४ | १ |
| ४० | २—३ | १ |
| ४७ | १—२ | १ |
| ४७ | ४—५ | १ |
| ४८ | १२ | ॥ |
| ४६ | १८—२५ | ४ |
| ५१ | १४—१५ | १ |
| ५३ | १६—२३ | ४ |
| ५५ | २१—२२ | १ |
| ५७ | ६—७ | १ |
| २६६ | १ | ॥ |

### बलभद्रवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २६ | २०—२५ | ३ |
| ३३ | १२—२१ | ५ |
| ३४ | ६—१० | १ |

### बृहस्पतिवचनम्

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| ४२३ | २३—२४ | १ |

### ब्रह्मगुप्तवचनानि

| पृ. सं. | पं. सं. | श्लो. |
|---|---|---|
| २२ | १०—१३ | २ |
| २३ | ४—५ | १ |

